KÂVYAMÂLÂ. 7.

# THE KARṆASUNDARÎ OF BIHLANA.



EDITED BY
PANḌIT DURGÂPRASÂD
AND
KÂS'ÎNÂTH PÂṆDURANG PARAB.

Second Revised Edition.

PRINTED AND PUBLISHED
BY
TUKÂRÂM JÂVAJÎ,
PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGAR" PRESS.
BOMBAY:

1895.

*Price* 8 *Annas.*

काव्यमाला । ७.

महाकविश्रीबिह्लणविरचिता

# 'कर्णसुन्दरी ।'

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परवोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधिता ।

सा च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता ।

द्वितीयं संस्करणम् ।

१८९५



मूल्यं रूप्यकार्धम् ।

# बिह्लणः ।

अस्ति कश्मीरेष्वनेकगुणगुम्फितं प्रवरपुरं[1] नाम नगरम्. वर्तते च ततः क्रोशत्रयान्तरे तक्षकनागाधिष्ठितविमलसलिलभरितकुण्डमण्डितस्य जयवनाख्यस्थलस्य समीपे द्राक्षा-कुङ्कुमक्षेत्रसमुल्लसितोभयभागः परमरमणीयः खोनमुख(ष)[2]नामको ग्रामः. निवसन्ति स्म तत्र गोपादित्य[3]महीभुजा मध्यदेशात्सादरमानीय समावासिताः श्रौतस्मार्तधर्मानुष्ठाननि-ष्ठितचेतसो ब्रह्मचिन्तनैकतानवृत्तयः कौशिकगोत्रोत्पन्नाः केचन भूसुरसत्तमाः. तेषु निखि-लवेदवेदाङ्गवेत्ता मुक्तिकलशो नाम पण्डितरत्नमासीत्. तस्य वदान्यो विक्रान्तो विद्वांश्च राजकलशाभिधस्तनयो बभूव. तस्मान्महाभाष्यव्याख्याता ज्येष्ठकलशाख्यः सूनुरुदपद्यत, यो नागादेवीं नाम पतिव्रताग्रगण्यां भार्यामूढवान्. तयोर्विद्वन्मूर्धन्यो नानानरपति-परिषत्सु लब्धसंमानः सत्कविरिष्टरामाख्यः, काञ्चनगौराङ्गो वेदवेदाङ्गसाहित्यादिनिखि-लविद्याकुलगृहं जगल्ललामभूतो महाकविर्बिह्लणः, कवितानिवासस्थलमानन्दाख्यश्चेति पुत्रत्रयमुदपेदे. तेषु बिह्लणो बाल्यमतिवाह्य यौवने नानादेशविलोकनकौतुकादनन्तदेव-सूनुर्कलश[4]देवराज्यसमये कश्मीरान्परित्यज्य मथुरा-वृन्दावन-कान्यकुब्ज(कनौज)-काशी-प्रयाग-अयोध्या-डाहल-धारानगर-गुर्जरदेश-सोमनाथपत्तन-सेतुबन्धादिस्थलेषु बम्भ्रम्य-माणस्तत्तद्देशीयविविधभूपालसभाजितः क्रमेण दक्षिणदिङ्मण्डनायमानां चालुक्यवंश्यनरे-न्द्रराजधानीं कल्याणाभिधां नगरीमाससाद. लब्धवांश्च तत्रैव चालुक्यवंशभूषणेन क-र्णाटदेशाधीशेन कुन्तलेन्दुना त्रैलोक्यमल्लापरनामधेयेनाहवमल्लेन तत्सूनुना विक्रमाङ्कदे-वेन वा सादरमर्पितां विद्याधिपतिरितिपदवीपुरस्कृतां[5] भूयसीं संपत्तिम्. प्रणिनाय च तत्रैव विक्रमाङ्कदेवचरिताभिधं महाकाव्यमिति विक्रमाङ्कदेवचरितादेवावगम्यते.

---

१. राजधानीनगरम्, अधुना यस्य श्रीनगरनाम्ना व्यवहारः. २. अधुना यस्य 'खुनूमोह्'नाम्ना प्रसिद्धिः. ३. ख्रिस्ताब्दप्रारम्भात्किंचिदूनचतुःशतवर्षपूर्वं गोपादित्यमहीपतिः कश्मीरेषु राज्यं कुर्वन्नासीत्. ४. 'कश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः ॥ ९३६ ॥ प्रसर्पतः करिटिभिः कर्णाटकटकान्तरे । राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणम् ॥ ९३७ ॥ त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम् । बिह्लणो वञ्चनां मेने विभूतिं तावतीमपि ॥ ९३८ ॥ इति कह्लणराजतरङ्गिण्याः सप्तमे तरङ्गे समुपलभ्यते. ख्रिस्ताब्दीयैकादशशतकस्योत्तरार्धे कलशदेवराज्यसमयः. तदैव बिह्लणः कश्मीरान्परित्यक्तवान्. ५. विक्रमाङ्कदेवचरिते प्रतिसर्गसमाप्तौ 'त्रिभुवनमल्लदेवविद्यापति' इति बिह्लणविशेषणं वर्तते. एतेन आहवमल्लापरनाम्ना त्रैलोक्यमल्लेनैव बिह्लणाय विद्यापतिरिति पदवी वितीर्णा स्यादित्यनुमीयते.

बिल्हणचरिताभिधे[1] खण्डकाव्ये तु "गुर्जरदेशे अनहिलपत्तनाभिधे नगरे वैरिसिंहा-[2]भिधो नरपतिः, सुताराभिधा[3] अवन्तिभूपालदुहिता तन्महिषी चासीत् । तयोरेका शशिकलानाम्नी कन्या समुत्पन्ना । सा च क्रमेण यौवनारूढातिरूपलावण्यवती पित्रोः सुतरामानन्ददायिनी बभूव । तत्पिता तु नित्यं तदध्यापनचिन्ताकुलस्तस्थौ । अस्मिन्नवसरे काश्मीरको बिल्हणकविस्तत्र समायातः । नीतश्च राजपुरोहितेनातिकौतुकान्महीपतिसमीपम् । वैरिसिंहमहीपतिरपि निरुपमं तद्विद्याचमत्कारमतिमधुरां च तदीयकवितामाकर्ण्य बहुसंपत्तिसमर्पणपूर्वकं साभ्यर्थनं च नियोजितवान्स्वदुहितुः शशिकलायाः पाठने । सापि पितुराज्ञानुकूलं बाल्योचितां शुकशारिकादिक्रीडामपहाय निजगुरुं बिल्हणं शुश्रूषमाणा विद्याभ्यासं कुर्वती स्वल्पैरेव दिवसैः संस्कृतप्राकृतादि सर्वमधीतवती । एकदा चातिसुरभिगन्धसंचाररुचिरे पुष्पमालादिपरिष्कृते प्रासादे राजसुतां कामशास्त्रं पाठयन्कविरासीत् । तदा च रूपयौवनविद्याविनयादिगुणगणसंपन्ने तस्मिन्कविवरे बद्धभावा शशिलेखा नानाविधैर्हावैस्तस्य चित्तमात्मायत्तं चकार । दैवनोदितः काममोहितश्च कविरपि प्राग्जन्मजायायास्तस्या गूढं गान्धर्वविधिना पाणिं जग्राह । रञ्जयामास च मन्मथतन्त्रप्रतिपादिताभिर्बहुविधाभिः केलिभिर्विविधाभिश्च बन्धक्रियाभिर्नरेन्द्रपुत्रीम् । एवं सुखमनुभवतोस्तयोरतिक्रान्ते कियत्यप्यनेहसि रक्षापुरुषा राजसुतायास्तप्ततपनीयकान्तीन्यङ्गानि म्लायमानशिरीषकुसुमोपमानि संभोगचिह्नाङ्कितानि चालोक्य, विज्ञाय च कथमपि सर्वं गूढं चरितं राज्ञे निवेदयांचक्रुः । राजापि वज्रनिपातोपमं तद्वृत्तमाकर्ण्य रोषेण प्रज्वलन्नादिदेश बिल्हणस्य शूलारोपणम् । तदैव घातुकपुरुषैः शूलाधिरोपणस्थलं नीतो बिल्हणः, उक्तश्च—'भो वध्य, संनिहितस्तवाधुना मृत्युः । स्मर निजामाराध्यदेवताम्' इति । बिल्हणोऽपि राजसुतासक्तमना मृत्युभयमप्यगणयन् 'अद्यापि तां कनकचम्पकदामगौरीं' इत्यादि शशिलेखास्मरणरूपां पञ्चाशिकां समुदीरितवान् । अत्रान्तरे प्राणप्रियाया निजसुतायास्तस्मिन्गाढमनुरागं निजमहिषीमुखादाकर्ण्य किंचिच्छिथिलितकोपो बिल्हणगुणगणवशीकृतस्वान्तैः पौरैः परिजनैर्मन्त्रिभिर्बोधितश्च ब्राह्मणवधभीरुर्नरेन्द्रः परमेश्वरेच्छामेव तादृशीं मन्यमानो निवारयामास कविं शूलारोपणात् । समर्पितवांश्च तदैव तस्मै शशिलेखाम्, बहुग्रामगजतुरगसुवर्णरत्नादिसमृद्धिं च । एवं मृत्युमुखान्मुक्तो बिल्हणकविर्नृपतिप्रसादमासाद्य शशिलेखया समं चिरं सुखमनुबभूव ।" इति कथा वर्तते. परमियं कथा नातिविश्वासार्हा, यतो बिल्हणः ख्रिस्ताब्दीयैकादशशतकोत्तरार्धे कश्मीरान्परित्यज्य समागतस्तदा अनहिलपत्तने चालुक्यवंशोद्भवो भीमदेवसूनुः कर्णराजो[4] महीपतिरासीत्, न तु वैरिसिंहः. चापोत्कट(चावडा)वंशोद्भवो वैरिसिंहस्तु ९२० मिते

१. बिल्हणचरितप्रणेतुर्नाम नोपलभ्यते. २. 'वीरसिंहः' इत्यपि नाम पुस्तके वर्तते. ३. पुस्तकान्तरे 'सुनारी' इति पाठोऽस्ति. ४. कर्णराजस्य राज्यसमयस्तु १०७२ मितात्ख्रिस्ताब्दादारभ्य १०९४ मितख्रिस्ताब्दपर्यन्तमासीत्.

खिस्ताब्द एव समाप्तोऽभूदिति ऑनरेबल्. ए. के. फॉर्ब्स्प्रणीत'रासमाला'ख्यगुजरातदेशेतिहासग्रन्थे प्रसिद्धमेव. एकादशशतकोत्तरभागे गुर्जरदेशे बिह्लणः समागत इति त्वसंदिग्धम्. गुर्जरदेशे च बिह्लणेन कश्चन क्लेशोऽनुभूत इति 'कक्षाबन्धं विदधति न ये सर्वदैवाविशुद्धास्तद्भाषन्ते किमपि भजते यज्जुगुप्सास्पदत्वम् । तेषां मार्गे परिचयवशादर्जितं गुर्जराणां यः संतापं शिथिलमकरोत्सोमनाथं विलोक्य ॥' अस्माद्विक्रमाङ्कदेवचरितस्थ(१८।९७)पद्यात्प्रतीयते. एवं कल्याणनगरेऽपि कुन्तलाधीशतो भूयांसमैश्वर्यमधिगत्यापि कांचन विपत्तिं बिह्लणोऽनुभूतवानिति 'सर्वस्वं[१] गृहवर्ति कुन्तलपतिर्गृह्णातु तन्मे पुनर्भाण्डागारमखण्डमेव हृदये जागर्ति सारस्वतम् । रे क्षुद्रास्त्यजत प्रमोदमचिराद्देष्यन्ति मन्मन्दिरं हेलान्दोलितकर्णतालकरटिस्कन्धाधिरूढाः श्रियः ॥', 'अयि किमनिशं राजद्वारे समुद्धुरकंधरे कुवलयदलस्निग्धे मुग्धे विमुञ्चसि लोचने । अमररमणीलीलावल्गद्विलोचनवागुराविषयपतितो न व्यावृत्तिं करिष्यति बिह्लणः ॥' अस्मात्कश्मीरदेशीयचौरीसुरतपञ्चाशिका(चौरपञ्चाशिका)पुस्तकप्रारम्भस्थश्लोकद्वयाज्ज्ञायते.

चौरपञ्चाशिका, विक्रमाङ्कदेवचरितम्, कर्णसुन्दरीनाटिका चेति ग्रन्थत्रयमद्यावधि[२] बिह्लणप्रणीतं समुपलब्धमस्ति. तत्र चौरपञ्चाशिका तावत्सुप्रसिद्धैव. विक्रमाङ्कदेवचरितं च जैसलमेरनगरात् डॉक्टर्बूलरेणासादितम्, प्रसिद्धिं च नीतम्. कर्णसुन्दरी तु नाद्यापि प्राकाश्यमाप्तवती. पूर्ववर्षे ग्वाल्हेरनगरनिवासिपण्डितगङ्गाधरजोशीसकाशादेकं कर्णसुन्दरीपुस्तकमस्मन्मित्रै राजगुरुपर्वणीकरोपाह्वनारायणभट्टैः प्राप्तमस्मभ्यं समर्पितं च. एतत्पुस्तकं प्रायः शुद्धं केनचित्संशोधकेन क्वचित्क्वचिदशुद्धतां नीतं शतत्रयवर्षप्राचीनमिवोपलक्ष्यमाणमस्ति. अस्मिन्पुस्तके पञ्चाशन्मितानि पत्राणि, प्रतिपृष्ठं षट्पङ्क्तयः, प्रतिपङ्क्ति च षड्विंशत्यक्षराणि सन्ति. पत्राणि च षडङ्गुलमितानि विस्तारे सार्धत्रयोदशाङ्गुलमितानि च दैर्घ्ये वर्तन्ते. पञ्चाशन्मितपत्रान्तिमपङ्क्तिसमाप्तौ 'समाप्ता चेयं कर्णसुंद–' इत्यस्ति. एतेनापरमप्येकं पत्रमासीत्, तस्मिन्पुस्तकलेखनकालोऽपि कदाचित्स्यादिति भाति. अन्यदप्येकं पुस्तकमस्मन्मित्रपण्डितज्येष्ठाराममुकुन्दजीशर्मणां साहाय्येन मुम्बईनगरमण्डनसत्कविपण्डितवरगट्टूलालजीशर्मणां पुस्तकसंग्रहादुपलब्धम्. किं त्वेतत्पुस्तकमत्यशुद्धं पत्रत्रयहीनं ग्वाल्हेरपुस्तकस्यैव प्रतिरूपकमिव प्रतीयमानमस्तीति नात्र तस्य कश्चिदुपयोगो जातः. केवलमेकस्माद् ग्वाल्हेरपुस्तकादेवैतन्मुद्रणमस्माभिर्विहितम्. कर्णसुन्दर्यां चास्यां पूर्वोक्तश्चालुक्यवंशोद्भवो भीमदेवात्मजः कर्णराज एव कथानायकः. अन्यद्वृत्तं तु प्रायः कविकल्पितमस्तीति भद्रम्.

---

१. डॉक्टर्बूलरस्य कश्मीर'रिपोर्ट'पुस्तकं द्रष्टव्यम्. २. विक्रमाङ्कदेवचरितादिष्वनुपलभ्यमानाः केचन श्लोकाः शार्ङ्गधरपद्धति-सूक्तिमुक्तावल्यादिषु बिह्लणनाम्ना समुद्धृताः समुपलभ्यन्त इत्यस्ति कश्चिदन्योऽपि ग्रन्थो बिह्लणप्रणीत इति प्रतीयते.

# काव्यमाला ।

महाकविश्रीविह्लणविरचिता

## कर्णसुन्दरी ।

प्रथमोऽङ्कः ।

अर्हन्नार्हसि मामुपेक्षितुमपि क्षामां त्वदर्थे तनुं
किं नालोकयसे भविष्यति कुतः स्त्रीघातिनस्ते सुखम् ।
अङ्गैः काञ्चनकान्तिभिः कुरु परिष्वङ्गं सुपर्वाङ्गना-
लोकैरित्थमुदीरितः क्षितिधरस्थायी जिनः पातु वः ॥ १ ॥

अपि च ।

संतापं शमयन्तु वस्त्रिविधमप्युद्धूलनानन्तरं
तिस्रस्ताः करतालिकाः पुररिपोर्निर्विघ्नसंध्यार्चनाः ।
देव्याः शैलभुवः क्षणं मदयता दृष्टिं यदाकर्णना-
त्कौमारेण शिखण्डिना निबिडितक्रीडारवं नृत्यते ॥ २ ॥

अपि च ।

वक्रेन्दोः सदृशी भविष्यति लिपिः कण्ठे नु कण्ठोचिता
लक्ष्मीः किं कुचमण्डले कुचभुवः संवादि मध्यं नु किम् ।
इत्यादि क्रमशः कुतूहलरसप्रेमालसा दृष्टयः
श्रीकान्तस्य जयन्ति दुग्धजलधेरभ्युल्लसत्यां श्रियि ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—कथं प्रभातसमयः ।

अपरशिखरिचूडाचुम्बि बिम्बं हिमांशो-
रिह हि विरहिणीनां याति शापैरिवास्तम् ।

अपि कुपितचकोरीनेत्रसब्रह्मचारी
भजति ककुभमैन्द्रीं कोऽपि सांध्यो विलासः ॥ ४ ॥
दधति गृहचकोराश्चन्द्रिकाम्भःशिलोञ्छं
क्वचन कनकशालाजालकाभ्यन्तरेषु।
अपि रतिभवनानि व्यञ्जयन्ति प्रियाणां
निधुवनसुखनिद्रां मूकपारावतानि ॥ ५ ॥
विडम्बयति दाडिमीकुसुममत्र सौत्रामणी
दरिद्रति वियद्द्रुमे मुकुलकान्तयस्तारकाः।
वपुस्तुहिनदीधितेरपि चकास्ति कस्तूरिका-
कुरङ्गनयनारुणं वरुणलाञ्छितायां दिशि ॥ ६ ॥

(नेपथ्याभिमुखम्।) आर्ये, अपि सुसंगतानि रङ्गमङ्गलानि। (विमृश्य।) पराङ्मुखीवार्या। किं नु कारणं स्यात्। (स्मृतिमभिनीय।)

आस्थानावसरे नरेन्द्रतरणेः सा दाक्षिणात्या नटी
नृत्यन्ती यददर्शि नूतनवयोविद्यानवद्या मया।
तद्गोष्ठीरसनिर्भरेण किमपि स्वप्ने यदद्य स्थितं
मन्ये मन्युकषायितेन मनसा तेन स्थिता मे प्रिया ॥ ७ ॥

(सप्रत्ययम्।) इतस्तावत्।

(प्रविश्य)

**नटी**—इअह्मि। (क)

**सूत्रधारः**—अलमसंभाव्यसंभावनया।

परिणयविधिरासीदावयोः पांसुलीला-
परिचयदृढरूढस्नेहयोर्बाल्य एव।
स्मरसि किमपि तत्राप्यानुकूल्यात्परं य-
त्सपदि पुनरसौ मे पञ्चबाणः प्रमाणम् ॥ ८ ॥

**नटी**—न मे कावि आसङ्का। आणवीयदु किं अणुचिट्ठीयदु त्ति। (ख)

(क) इयमस्मि।

(ख) न मे काप्याशङ्का। आज्ञापयतु किमनुष्ठीयतामिति।

**सूत्रधारः**—नन्वस्मिन्नणहिल्लपाटणकमुकुटमणौ श्रीशान्त्युत्सवदेवगृहे भगवतो नाभेयस्य महामात्यसंपत्करप्रवर्तिते यात्रामहोत्सवे समुत्सुकः सामन्तजनः प्रत्यग्रप्रयोगदर्शनाय ।

(नेपथ्ये गीयते ।)

णवमाहवीएँ दावीय सरसविलासाइँ परवसाइन्तो ।
मन्दीकअकुन्दलआचुम्बणतण्हो भमइ भमरो ॥ ९ ॥ (क)

**सूत्रधारः**—(सहर्षम् ।) कथमुपक्षिप्तैव नटैर्नाटिका कर्णसुन्दरी । अहो सुकृतानि सामाजिकजनस्य ।

हंहो भाग्यमहानिधिर्दयितया देवस्य दग्धुः पुरां
पात्रं पुत्र इव स्वयं विरचितः सारस्वतीनां गिराम् ।
साहित्योपनिषन्निषण्णहृदयः श्रीबिह्लणोऽस्यां कविः
किं चैतत्किल भीमदेवतनयः साक्षात्कथानायकः ॥ १० ॥

स च कविरेवमुक्तवान्—

औचित्यावहमेतदत्र तु रसः काष्ठामनेनार्हति
व्युत्पत्तेरिदमास्पदं पदमिदं काव्यस्य जीवातवे ।
एवं यः कवितुः श्रमः सहृदयस्तं पुस्तकेभ्यः पठ-
न्सूक्तीरुत्पुलकः प्रमार्ष्टि निविडैरानन्दबाष्पोद्गमैः ॥ ११ ॥

अपि च ।

न विश्वासस्थानं प्रियमभिदधानोऽपि पिशुनो
विषं प्राणान्हर्तुं धुरि मधुरमेव प्रभवति ।
परं शक्तः कर्तुं किमु मम वराकः कतिपये
यदद्यापि ज्ञप्तौ सुकविवचसां केऽपि सुजनाः ॥ १२ ॥

(कर्णं दत्त्वा ।) किमात्थ । कोऽत्र कथासंबन्ध इति । श्रूयताम् ।

विद्याधरेन्द्रतनयां नयनाभिरामां
लावण्यविभ्रमगुणां परिणीय देवः ।

---

(क) नवमाधव्या दृष्ट्वा सरसविलासान्परवशायितः ।
मन्दीकृतकुन्दलताचुम्बनतृष्णो भ्रमति भ्रमरः ॥

चालुक्यपार्थिवकुलार्णवपूर्णचन्द्रः
साम्राज्यमत्र भुवनत्रयगीतमेति ॥ १३ ॥

(पुरोऽवलोक्य ।) कथमयमसङ्ख्याता महामात्यप्रणिधिभूमिकामाश्रित एव तदेहि । अनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

## प्रस्तावना ।

(ततः प्रविशति प्रणिधिः ।)

**प्रणिधिः**—अहो किमपि यौगन्धरायणप्रभृतिमहामात्यविजयिनोऽभ्यर्हिता मतिरमात्यसंपत्करस्य । तथा हि ।

वात्सल्यं न वहत्यपत्यविषये व्याक्षिप्यते न क्षणं
दाक्षिण्येन समीहिते नववधूवर्गेऽपि धीराशयः ।
निष्णातः कुटिले नयाध्वनि चरन्नाचारपूतः प्रभो-
र्दुःसाध्यानपि साधयत्यभिमतानर्थान्सुसाधानिव ॥ १४ ॥

अपि च ।

अस्याश्चर्यमयस्य मन्त्रगतयः स्वैरन्तरङ्गैरपि
ज्ञायन्ते न विधेरिवातिकुटिला वैदग्ध्यसीमाभुवः ।
श्रूयन्ते प्रतिभूभृतां वसतयस्त्वङ्गत्तुरंगावली-
विश्वोत्खेलखुराग्रखण्डितमणिक्षोणीतलाः केवलम् ॥ १५ ॥

किं च ।

शेषे प्रज्ञाविशेषः स्फुरति यदि किमु च्छद्मना पद्मनाभः
संरम्भात्तेन तेन स्वयमसुरवधव्यग्रभावं दधार ।
वाचामीशोऽपि सत्यं यदि विपुलमतिः श्रूयते वज्रिणः किं
दैत्यावस्कन्दबन्दिग्रहणपरिभवश्यामला शक्रलक्ष्मीः ॥ १६ ॥

संप्रति प्रेषिताश्च प्रतिदिशं सेनापतय इति । (कर्णं दत्त्वा । आकाशमवलोक्य ।)

अमरसरिदुपान्तभ्रान्तचक्राह्वचक्र-
भ्रममुरसिजभारैः काश्चन व्यञ्जयन्त्यः ।

किमु विततनितम्बाभोगसंवाह[1]वेग-
स्खलनमुखरचञ्चत्काञ्चयः संचरन्ति ॥ १७ ॥

(अग्रतो विलोक्य । सविस्मयम् ।)

तुलाकोटिक्काणप्रणयिभिरवाप्तैरिव गते-
र्विलासे शिष्यत्वं भवनकलहंसैरनुगता ।
सुधामुग्धैरङ्गैः शशिन इव गर्भाद्विगलिता
कुरङ्गाक्षी केयं तिलकयति लीलावनभुवम् ॥ १८ ॥

(पुनरवलोक्य ।)

उच्चञ्चुपञ्जरचकोरकचर्व्यमाण-
पूर्णेन्दुसुन्दरतराननचन्द्रिकेयम् ।
देव्याः कथं परिजनप्रमदाजनेन
नीतैव मन्दिरममन्दकुतूहलायाः ॥ १९ ॥

(विचिन्त्य ।)

एताः काश्चन निश्चलालकलताश्चिन्तातिरेकश्रम-
स्विद्यद्भालतटा यदम्बरतले भ्राम्यन्ति वामभ्रुवः ।
श्रीचालुक्यकुलोद्वहे कलयति त्र्यक्षोपचर्यामिह
स्रस्ता काचन लिङ्गलङ्घनवशात्तद्वेद्मि विद्याधरी ॥ २० ॥

(सचमत्कारम् ।) सत्यस्वप्नः सांप्रतममात्यः । तेनैवंविधेन व्यतिकरेण मां प्रति भर्तुश्चक्रवर्तित्वमभिहितमासीत् । तत्परिजनमुखेन

जानीते निपुणा कथंचन मनाग्देवी च सीता यथा
वारंवारमसौ तथा नरपतेः संदर्शनीया मया ।
अन्योन्यं हृदये तयोः स्पृहयतोर्भावेऽतिभूमिं गते
पर्याप्तः कुसुमायुधः स भगवान्पारावताराय नः ॥ २१ ॥

तद्भवतु । सांप्रतमेव

लीलोद्याने भवनवलभौ रत्नवातायनेषु
क्रीडासौधे तदनु मदनोद्यानशालासु बालाम् ।

---

१. आदर्शपुस्तके 'संवाह–' इत्यस्य 'संबाध–' इति शोधनं कृतमस्ति.

इन्दोर्गर्भे चिरमिव धृतैरङ्गकैस्तामनङ्ग-
स्याज्ञावाप्तौ पुनरिव नवां सिद्धिमालेखयामि ॥ २२ ॥

(नेपथ्ये ।)

जयति विश्रामावसरो देवस्य । संप्रति

अन्योन्यं लज्जयेव प्रतिफलनमिषात्कुट्टिमान्तर्विशन्तः
पातालं भूमिपालाः किसलयितशिखाः[1] पाणिबन्धैः प्रणम्य ।
गच्छन्ति च्छत्रखण्ड[2]स्तबकितककुभश्चित्रवादित्रजैत्र-
ध्वानाकृष्टप्रहृष्टप्रचुरपुरवधूवीक्ष्यमाणा गृहाणि ॥ २३ ॥

अपि च ।

पञ्चास्त्रस्य त्रिलोकीहठविजयमहारम्भसंभारदीक्षा-
माचक्षाणा इवोच्चैर्जघनझ्ँणझ्झण[3]न्मेखलाचक्रवालैः ।
ध्वस्ताम्भोजैः सुभिक्षं दिशि दिशि विशदैर्दर्शयन्त्यश्च वक्रै-
श्चन्द्राणां सान्द्रलीलातिलकितगतयो निर्गता वाररामाः ॥ २४ ॥

किं च ।

विश्रान्तो मुरजध्वनिर्जलधरध्वानानुकारी गताः
संगीताङ्गणतस्तरङ्गितमुखज्योत्स्नारसा लासिकाः ।
चण्डः केलिशिखण्डिनां न विरमत्यद्यापि नृत्योत्सव-
श्चञ्चच्चञ्चव एव किं च विचरन्त्यन्तश्चकोराङ्गनाः ॥ २५ ॥

**प्रणिधिः**—यत्पुनर्देवो विश्राममण्डपमलंकृतवांस्तन्नूनमेतद्दर्शनजन्मा मन्मथावेग एव विविक्तस्थानस्थितिमुपदिशति । तद्गत्वा यथोचितं विरचयामि । (इति निष्क्रान्तः ।)

**शुद्धविष्कम्भकः ।**

---

(ततः प्रविशति राजा विदूषकश्च ।)

**राजा**—(सौत्सुक्यम् ।)

धातुस्तन्मुखवर्तनाफलहकः श्यामावधूवल्लभ-
स्तल्लेखोद्यततूलिकाग्रगलिकातास्तारा: सुधाविप्रुषः ।

---

१. 'किशलयितशिखापाणि–' इत्यादर्शपाठः. २. 'छत्रषंड–' इत्यादर्शपाठः. ३. 'ज्झणज्झण–' इत्यादर्शपुस्तकपाठः.

तल्लावण्यरसस्य शेषममला सा शारदी कौमुदी
तद्भूनिर्मितिमानसूत्रमपि तच्चापं मनोजन्मनः ॥ २६ ॥

अपि च[1] ।

मज्जन्तीव दृशः कुरङ्गकदृशो लीलाविलासोर्मिषु
भ्रूलेखा सृजतीव विभ्रमशतैः कामाय दामावलिम् ।
लावण्यामृतनिर्झरैः स्नपयतीवाङ्गानि किं चाधर-
स्तारां सिञ्चति पद्मरागकिरणोत्सेकैरिवैकावलीम् ॥ २७ ॥

अपि च ।

त्रिवलिवलितलीलालोलवेणीकलापं
किमपि रसविभूतेस्तिर्यगाकेकराक्षम् ।
कलितकुटिलकण्ठं दर्शनोत्कण्ठयास्या
लिखितमिव ममान्तस्तन्मुखं मन्मथेन ॥ २८ ॥

**विदूषकः**—भो, किं वि पुच्छामि । (क)

**राजा**—(तदवधीरणेन ।)

विधत्ते निःसेकं सहजरमणीयस्तरुणिमा
वपुर्वल्लीं चित्रैः कवचयति लीलाकिसलयैः ।
विलासव्यापारः किमपि कमलस्थो नयनयो-
रनङ्गं तन्व्यङ्ग्यास्त्रिभुवनजिगीषुं रचयति ॥ २९ ॥

**विदूषकः**—भो, का एसा लीलावणप्पवेसे पिअवअस्सेण दिट्ठा ।(ख)

**राजा**—

ध्यानान्ते विधिना प्रणम्य चरणौ चन्द्रार्धमौलेरहं
कैश्चिज्जप्यपदैः प्रदक्षिणयितुं यावत्समभ्युद्यतः ।

---

(क) भोः, किमपि पृच्छामि ।

(ख) भोः, कैषा लीलावनप्रवेशे प्रियवयस्येन दृष्टा ।

---

१. 'अपि च' इत्यादर्शे नास्ति.

तावत्काचिदनङ्गजङ्गमपुरीवाग्रे मनोग्राहिणी
रम्भास्तम्भमनोहरोरुयुगला बालाभवच्चक्षुषोः ॥ ३० ॥
स्वप्नोऽसौ किमुतेन्द्रजालमपरं किं वा किमप्यद्भुतं
यत्सा कान्तितरङ्गिताङ्गलतिका दृष्टा कुरङ्गेक्षणा ।
उल्लेखः स नवीन एव सुमतेः कस्यापि रूपे विधेः
संवादोऽपि न यस्य पङ्कजशशिज्योत्स्नामृणालादिभिः ॥ ३१ ॥

**विदूषकः**—भो, एदस्स उज्जाणप्पदेसस्स किं करीअदु जत्थ अणत्थो एरिसो समावडिदो । (क)

**राजा**—मूर्ख,

तदेकं देवस्य स्पृशतु मदनस्यास्पदपदं
लतास्तास्तत्रत्याः स्तबकयतु चैत्रः प्रतिदिनम् ।
असौ दृष्टा यत्र क्षणममललावण्यसरसी
जगन्नेत्राचम्यं किमपि दधती कान्तिसलिलम् ॥ ३२ ॥

**विदूषकः**—भट्टिणो संदावदाअणं ति भणामि । (ख)

**राजा**—सखे,

चान्द्री वर्तिर्नयनयुगले जीवलोकस्य सैका
सा साम्राज्ये कुसुमधनुषः कीर्तिहेतुः पताका ।
तत्प्राप्त्याशाविवशमनसा केनचित्तप्यते चे-
न्निःसंबन्धं कथयतु भवान्कस्तदीयोऽपराधः ॥ ३३ ॥

**विदूषकः**—(छोटिकां दत्त्वा ।) जइ एव्वं अत्थि विवेओ ता कीस ण विरज्जीअदि । (ग)

**राजा**—अनभिज्ञोऽसि । कथ्यते । पश्य ।

रागः कस्यचिदेति चेतसि पदं यः काकतालीयतः
कस्यांचिन्न विवेकवारिविसरैर्धौतोऽपि निर्यात्यसौ ।

(क) भोः, एतस्योद्यानप्रदेशस्य किं क्रियते यत्रानर्थ ईदृशः समापतितः ।
(ख) भर्तुः संतापदायकमिति भणामि ।
(ग) यद्येवमस्ति विवेकस्तत्कुतो न विरज्यते ।

माञ्जिष्ठादपि सोऽन्य एव किमपि स्थैर्यास्पदं मन्मथे-
नावर्त्यैव निजेन बाणशिखिना चित्तैक्यमापादितः ॥ ३४ ॥

**विदूषकः**—अध किं ति देवी दुम्मणायन्ति व्व मये लक्खिदा। (क)

**राजा**—शृणु। निवेदयामि।

अद्योद्याने मरकतमयीं वापिकामुत्तरेण
स्वप्ने दृष्टा प्रकृतिमधुरा माधवीमण्डपान्तः।
कार्प्येणाक्षी रतिरिव मया विप्रयुक्ता स्मरेण
स्मारं स्मारं किमपि दधती दुःसहां मोहनिद्राम् ॥ ३५ ॥

**विदूषकः**—तदो। (ख)

**राजा**—

अम्ब त्र्यम्बकपक्ष्मलाक्षि भगवन्विश्वैकवीर स्मर
स्मर्तव्या जननान्तरेऽपि युवयोः कारुण्यलेशादहम्।
अस्मिञ्जन्मनि तावदुन्मदसुरस्तम्बेरमाकृत्रिम-
क्रीडामन्दगतिः स सुन्दरवपुर्नो नेत्रमैत्रीं गतः ॥ ३६ ॥

एवं पुनः पुनरुदीर्य विदीर्यमाणं
वज्राग्रभिन्नमिव सा हृदयं दधाना।
मोहं गता कुचतटे नयनाम्बुलेशै-
रासूत्रितत्रिचतुरापरहारलेखा ॥ ३७ ॥

**विदूषकः**—हद्धी हद्धी पमादो। संकडे पडिदा महाणुभावा। तदो। (ग)

**राजा**—

अथ कथमपि संज्ञां प्राप्य दीर्घं श्वसन्ती
कुचपरिसरनृत्यत्तारहारावलीका।

(क) अथ किमिति देवी दुर्मनायमानेव मया लक्षिता।

(ख) ततः।

(ग) हा धिक् हा धिक् प्रमादः। संकटे पतिता महानुभावा। ततः।

विचकिलवनगुल्मे नूतनीभूतवल्ली-
वलयनिगलिता सा पाशबन्धे प्रवृत्ता ॥ ३८ ॥

विदूषकः—(हस्तमुद्यम्य ।) अब्बह्मण्णं अब्बह्मण्णम् । (क)

राजा—वैधेय, स्वप्नविधिरयम् ।

विदूषकः—तदो । (ख)

राजा—

विरम रमणि प्राणत्यागे धृता किमिति स्पृहा
ननु भगवतः कंदर्पस्य त्वमुच्छ्वसितान्तरम् ।
इति शशिमुखीमुक्त्वा यावद्बिभर्मि पटाञ्चले
चटुलर[1]शना तूर्णं तावद्गता क्वचिदेव सा ॥ ३९ ॥

अनन्तरमिदं जातम् । अस्ति च स्वप्नदृष्टजनस्य संवादः । तन्न[2] जाने किं भविष्यति ।

विदूषकः—कल्लाणपिसुणं एदं सव्वं भवदित्ति किं अण्णम् । अवि ण्णादं देवीए । (ग)

राजा—अथ किम् ।

विदूषकः—प[3]रुखक्खरं आलविअ ण किं पि अण्णं आअरिदम् । (घ)

राजा—

नो किंचित्परुषाक्षरं निगदितं नो दर्शितः संभ्रमः
कासावित्युपहासगर्भितरुषा प्रश्नोऽपि नाविष्कृतः ।
निःश्वासः परिवृत्त्य किं तु शनकैः श्यामीकृतप्रज्वल-
न्नानारत्नमयप्रदीपकिरणश्रेणिर्विमुक्तस्तया ॥ ४० ॥

---

(क) अब्रह्मण्यमब्रह्मण्यम् ।

(ख) ततः ।

(ग) कल्याणपिशुनमेतत्सर्वं भवतीति किमन्यत् । अपि ज्ञातं देव्या ।

(घ) परुषाक्षरमालप्य न किमप्यन्यदाचरितम् ।

---

१. 'रसना' इत्यादर्शपाठः. २. 'तं न' इत्यादर्शपाठः. ३. 'परुखसखरं' इत्यादर्शपाठः.

**विदूषकः**—एस ज्जेव्व कराला गरलगण्ठी । अहवा तुज्झ किं जादम् । तुअं लुलुल्लरेहिं बोलेहिं पाअपडणेहिं पुणो पि अप्पवसं करेसि । अहं जेव्व एक्को णिब्भच्छिआमि । एदस्स दुट्ठब्रह्मणस्स एदं खु सव्वं विलसिदं त्ति । (क)

**राजा**—कथं न जातम् ।

न यस्मिन्दाक्षिण्यं परिणतमियत्त्वस्य विषये
विकल्पाधिष्ठानं तदपि विहितं प्रेम सुदृशः ।
इतः शून्यं चेतः स्मरकितवसंचारचकितं
न जानीमो धातुः किमधिकरणः सूत्रणविधिः ॥ ४१ ॥

(नेपथ्ये ।)

सुखाय कुसुमसमयसमारम्भो देवस्य । संप्रति हि

रक्ताशोकद्रुमाणां लसति किसलयश्रेणिरार्द्रापराध-
प्रेयः शौण्डीर्यपीतद्रविडवरवधूचारुबिम्बाधरश्रीः ।
उन्मेषश्चम्पकानामजरठमरठीगण्डपालीविलासः
कर्णाटीहास्यलेशान्विचकिलमुकुलस्फूर्तयो वार्तयन्ति ॥ ४२ ॥

कान्ते नूतनचूतमञ्जरिधनुर्दण्डेऽधुना संदध-
त्कंदर्पः कलकण्ठपञ्चमरवब्रह्मास्त्रमव्याहतम् ।
दोर्युग्मं वलयीकरोति युगपत्कर्तुं त्रिलोकोपरि
स्वामाज्ञां रतिवक्रपत्रशबलं मौर्वीकिणाङ्काङ्कितम् ॥ ४३ ॥

**विदूषकः**[1]—(अन्यतः ।)

कावेरीणालिएरीतरलणनिउणा णम्मदाणम्मआरा
कञ्चीए चुम्बणद्दा तुमुलिदमुरलालोलकल्लोलमाला ।

---

(क) एषैव कराला गरलग्रन्थिः । अथवा तव किं जातम् । त्वं मधुरैर्वचनैः पातपतनैः पुनरप्यात्मवशां करिष्यसि । अहमेवैको निर्भर्त्स्ये । एतस्य दुष्टब्राह्मणस्यैतत्खलु सर्वं विलसितमिति ।

---

१. 'विदूषकः' इत्यादर्शपुस्तके नास्ति.

एदे गोदावरीए लहरिपरिचिदा दिण्णसिप्पाकडप्पा
कंदप्पोद्दीवणेच्छागहिदविहरणा दाहिणा एन्ति वाआ ॥४४॥(क)

**राजा**—

क्वचिदविषये सा सारङ्गीतरङ्गितलोचना
हृदि कवचितः पञ्चेषुर्मे विकुञ्चितकार्मुकः ।
अयमपि बत प्राप्तश्चूताङ्कुराकुलकोकिला-
कलरवजयोद्धोषः कालः किमत्र समीहितम् ॥ ४५ ॥

(सनिर्वेदोत्कण्ठम् ।)

आवासः किलकिञ्चितस्य दयिता पार्श्वे विलासालसा
कर्णे कोकिलकामिनीकलरवः स्मेरो लतामण्डपः ।
गोष्ठी सत्कविभिः समं कतिपयैर्मुग्धाः सुधांशोः कराः
केषांचित्सुखयन्ति चात्र हृदयं चैत्रे विचित्रोत्सवे ॥ ४६ ॥

संप्रति

कुर्वन्ति कोकिलकलोपहतिं लतासु
रुन्धन्ति वासभवनेषु समीरमार्गान् ।
किं तन्न यद्विरहिणीनिवहस्य सख्यः
सावज्ञमाकुलतया कलयन्त्यजस्रम् ॥ ४७ ॥

(विचिन्त्य ।) तत्कायमात्मा विनोदयितव्यः ।

**विदूषकः**—भो अवस्स, अहिणवमहुरसतरङ्गिदललिदलदालिङ्गिद-कुसुमहसिदतरुणतरुमण्डलं कुण्डलिदकोदण्डचण्डप्पहारपङ्कमअणसुहडप-

---

(क) कावेरीनालिकेरीतरलननिपुणा नर्मदानर्मकाराः
काञ्च्याश्चुम्बनाद्रीस्तुमुलितमुरलालोलकल्लोलमालाः ।
एते गोदावर्या लहरिपरिचिता दत्तसिप्राकटप्राः
कंदर्पोद्दीपनेच्छागृहीतविहरणा दक्षिणा आगच्छन्ति वाताः ॥

ज्जलिज्जन्तसहआरङ्कुरसिलीमुहं रज्जन्तकण्ठकलअण्ठचारुपञ्चमस्सरमहुरिज्जन्तं मअणुज्जाणं पेक्खन्तो णिव्वुइं उव्वहिस्सदि भवं । (क)

**राजा**—सहृदयो मे वयस्यः ।

यत्कोकिलाकलरवं कलयत्यनङ्ग-
श्चूताङ्कुरं धनुषि यद्विजयास्त्रहेतोः ।
यच्च स्मितं सुमनसां स समित्प्रपञ्चो
जीवातवे विरहपावकडम्बरस्य ॥ ४८ ॥

**विदूषकः**—भो, एत्थ कहिं पि भविस्सदि देव्ववसेण दंसणगोअरे सा तेल्लोक्कसुन्दरीति भणामि । (ख)

**राजा**—एवमस्तु । उपदिश पन्थानम् ।

**विदूषकः**—इदो सेवागदणरिन्दसहस्ससंकिण्णं विलाससंचिअतेल्लोक्कसुन्दरजणं अत्थाणङ्गणं परिहरिअ चउक्किआए खिडिक्किआदो रअणदुआरिआए णीसरीअ कहिं पि एदु भवं । (ग)

(इति परिक्रामतः ।)

**विदूषकः**—इदं तं कोइलपढिज्जन्तचारुपञ्चमाभिहाणमअणमन्तसंमोहनमढं संततट्ठाणं वसन्तसुहडस्स । ता पविसदु पिअवअस्सो । (घ)

(इति तथा कुरुतः ।)

---

(क) भो वयस्य, अभिनवमधुरसतरङ्गितललितलतालिङ्गितकुसुमहासिततरुणतरुमण्डलं कुण्डलितकोदण्डचण्डप्रहारपटुमदनसुभटतीक्ष्णीक्रियमाणसहकाराङ्कुरशिलीमुखं रज्यत्कण्ठकलकण्ठचारुपञ्चमस्वरमुखरीक्रियमाणं मदनोद्यानं पश्यन्निर्वृतिमुद्वक्ष्यति भवान् ।

(ख) भोः, अत्र कुत्रापि भविष्यति दैववशेन दर्शनगोचरे सा त्रैलोक्यसुन्दरीति भणामि ।

(ग) इतः सेवागतनरेन्द्रसहस्रसंकीर्णं विलाससंचितत्रैलोक्यसुन्दरजनमास्थानाङ्गणं परिहृत्य चतुष्किकायाः गवाक्षाद्रत्नद्वारिकाया निःसृत्य कुत्राप्येतु भवान् ।

(घ) इदं तत्कोकिलपठ्यमानचारुपञ्चमाभिधानमदनमन्त्रसंमोहनमठं(?) संततास्थानं वसन्तसुभटस्य । तत्प्रविशतु प्रियवयस्यः ।

**विदूषकः**—पिअवअस्स, पेक्ख ।

लाडीतण्डवकेलिखिन्नचलणच्छाआलवं पल्लवं
कङ्केली पअडेदि पाडलितरू जादो पसूणञ्चिदो ।
एदं कुङ्कुमसिक्ककीररमणीगण्डप्पहं चम्पकं
कम्पावेइ विओइणीओँ बउलो फुल्लेहिँ सल्लेहिँ व ॥ ४९॥ (क)

(इति संस्कृतमाश्रित्य ।)

कुर्वाणाः प्राणनाथे प्रणयकलिरुषं जर्जरां गुर्जरीणां
भिन्दानाः सान्द्रमानग्रहपटिममदं मेदपाटाङ्गनानाम् ।
उन्मीलन्मालवस्त्रीवदनपरिमलग्राहिणो हूणरामा-
कामारम्भश्रमाम्भःकणहरणरसोल्लासिनो वान्ति वाताः ॥ ५० ॥

**राजा**—(सोपहासम् ।) अहो वर्णनाक्रमः । (इति निःश्वस्य समन्तादवलोक्य च ।)

लीलोद्याने चलकिसलयाः शाखिनः खेललोला-
श्लिष्यद्[1]भृङ्गावलिवलयिता भान्ति यावन्त एते ।
कोपावेशाद्वलयितधनुर्बद्धगोधाङ्गुलित्र-
स्तावद्योऽपि त्रिभुवनजयी धावतीवासमास्त्रः ॥ ५१ ॥

एहि । तस्यास्तरङ्गशालाया अभ्यन्तरे क्षणमुपविशावः ।

(तथा कुरुतः ।)

---

(क) प्रियवयस्य, पश्य ।

लाटीताण्डवकेलिखिन्नचरणच्छायालवं पल्लवं
कङ्केलिः प्रकटयति पाटलितरुर्जातः प्रसूनाञ्चितः ।
एतत्कुङ्कुमसिक्तकीररमणीगण्डप्रभं चम्पकं
कम्पयति वियोगिनीर्बकुलः पुष्पैः शल्यैरिव ॥

---

१. आदर्शपुस्तकेऽस्मिन्मन्दाक्रान्तावृत्ते 'श्लिष्यद्भृङ्गावलीभिर्वलयितलतिका भान्ति यावन्त एते' इति द्वितीयः पादः स्रग्धरानिबद्धः शोधकेन स्थापितः. आदर्शपाठस्तु न ज्ञातुं शक्यते.

**विदूषकः**—(भित्तिमवलोक्य सचमत्कारम् ।) अए, का एसा पच्चाएसो उव्वसीपमुहाणं अच्छराणं सव्वङ्गलडहा आलिहिदा । (क)

**राजा**—(अवलोक्योत्थाय च ।)

एतत्तदेव सितदेवतरुप्रसून-
सौभाग्यमङ्कमनङ्गविलासवेश्म ।
जैत्रः स एव च विलोचनयोर्विलासः
सैवेन्दुसुन्दरमुखी लिखितेयमास्ते ॥ ९२ ॥

अपि च ।

सैवोन्मज्जत्कनककलशप्रेक्षणीयस्तनश्री-
मूर्तिर्लोकत्रयविजयिनी राजधानी स्मरस्य ।
एतच्चक्षुस्तदपि विदलत्केतकीपत्रमित्रं
छाया सेयं नियतमधरे विद्रुमोत्सेकमुद्रा ॥ ९३ ॥

**विदूषकः**—भो, एसा चित्ते केण विलिहिदा । (ख)

**राजा**—मम तावन्मकरकेतुना । इह तु न जाने ।

**विदूषकः**—भो, भणामि किं पि जइ मे वअणं करेसि । (ग)

**राजा**—किं न कथयसि ।

**विदूषकः**—ओसरीयदु इमादो तरङ्गसालादो तुरिदम् । कदापि देवी एत्थ आअच्छेदि । (घ)

**राजा**—कुपिता कथमागच्छति सौभाग्याभिमानखण्डनानुप्रवेशात् ।

---

(क) अये, कैषा प्रत्यादेश उर्वशीप्रमुखाणामप्सरसां सर्वाङ्गलटभा-लिखिता ।

(ख) भोः, एषा चित्रे केन विलिखिता ।

(ग) भोः, भणामि किमपि यदि मे वचनं करोषि ।

(घ) अपस्त्रियतामस्यास्तरङ्गशालायास्त्वरितम् । कदापि देव्यत्रागच्छति ।

(ततः प्रविशति हारलतया सह देवी ।)

**देवी**—हारलदे, ता कआपराधं पेक्खिअ एह्णि सअं अणुसरन्ती अज्जउत्तेण केरिसी भणिआमि । (क)

**हारलता**—भट्टिणि, महानुभाव त्ति किं अण्णम् । (ख)

**देवी**—जदि दिट्ठिआ परुसत्तणमुव्वहामि, अज्जउत्तो आअसीअदि । अणुचिदकारिणी भवामि । (ग)

**हारलता**—देवीए विणा अण्णो को एदं मन्तेदि । विणा मअङ्कलेहं कुदो जोह्णाए बिसरो । (घ)

**देवी**—अवि जाणासि किं उद्दिसिअ अज्जउत्तेण सिविणए पलविदम् । (ङ)

**हारलता**—तुज्झवसेक्कजीविदस्स णत्थि अण्णा वाणी । एवंविधा जेव्व सिविणआ [अ] विप्पलम्भका होन्ति । ण किं पि आसङ्कणिज्जम् । (च)

(इति परिक्रामतः ।)

**देवी**—कण्णसुन्दरी अज्जउत्तस्स दंसणगोअरं गदा । (छ)

**हारलता**—रविकिरणाणं वि अगम्मे त्ति कधं एदम् । (पुरोऽवलोक्य ।) एसो तरङ्गसालाए भट्टा वट्टदि । ता उपसप्पीअदि । (ज)

---

(क) हारलते, तत्कृतापराधं प्रेक्ष्याधुना स्वयमनुसरन्त्यार्यपुत्रेण कीदृशी भण्ये ।

(ख) भट्टिनि, महानुभावेति किमन्यत् ।

(ग) यदि दिष्ट्या परुषत्वमुद्वहामि, आर्यपुत्र आयास्यते । अनुचितकारिणी भवामि ।

(घ) देव्या विनान्यः क एतन्मन्त्रयते । विना मृगाङ्कलेखां कुतो ज्योत्स्नाया विसरः ।

(ङ) अपि जानासि किमुद्दिश्यार्यपुत्रेण स्वप्ने प्रलपितम् ।

(च) त्वद्वशैकजीवितस्य नास्त्यन्या वाणी । एवंविधा एव स्वप्ना [च] विप्रलम्भका भवन्ति । न किमप्याशङ्कनीयम् ।

(छ) कर्णसुन्दर्यार्यपुत्रस्य दर्शनगोचरं गता ।

(ज) रविकिरणानामप्यगम्येति कथमेतत् । एष तरङ्गशालायां भर्ता वर्तते । तदुपसर्प्यते ।

**देवी**—किं पि सुणन्तीओ उपसप्पह्म । (क)

**राजा**—(बद्धाञ्जलिः ।)

आयासः किमयं वृथैव धनुषो देव स्मर स्वीकृत-
स्त्वत्पत्रिव्ययपात्रमत्र कतमः कात्यायनीकामुकः ।
एतां लोकविलक्षणेन विधिना केनापि येनासिषी(?)
यायां(?) चित्रगतामपि प्रियतमां संजीव्य संप्रापय ॥ ९४ ॥

**देवी**—कस्स कदे अज्जउत्तो एवं मन्तेदि । (ख)

**हारलता**—कस्स अण्णस्स । भोदिं जेव्व कुविदं जाणिअ चित्तपडिबिम्बेण अप्पाणं विणोदेदि भट्टा । ता उपसप्पीअदु । (ग)

(तथा विधत्तः ।)

**देवी**—जेदु अज्जउत्तो । (घ)

**हारलता**—जेदु जेदु भट्टा । (ङ)

**देवी**—(सविनयम् ।) मए एव्व तदा किं पि खलिदं ति अज्जउत्तेण ण अण्णधा भणिदव्वम् । (च)

**राजा**—

त्रिजगति भवती परं ममैका दिशति मुदं कुमुदस्य कौमुदीव ।
प्रभुरसि कुरुषे रुषं कदाचिद्व्रजसि कदापि यथारुचि प्रसादम् ॥९५॥

**विदूषकः**—महाणुभावा देवी जा एव्वं पतिच्छत्तणं धारेदि । (छ)

---

(क) किमपि शृण्वत्य उपसर्पावः ।

(ख) कस्य कृते आर्यपुत्र एवं मन्त्रयते ।

(ग) कस्यान्यस्य । भवतीमेव कुपितां ज्ञात्वा चित्रप्रतिबिम्बेनात्मानं विनोदयति भर्ता । तदुपसर्प्यताम् ।

(घ) जयत्वार्यपुत्रः ।

(ङ) जयतु जयतु भर्ता ।

(च) मयैव तदा किमपि स्खलितमित्यार्यपुत्रेण नान्यथा भणितव्यम् ।

(छ) महानुभावा देवी यैवं पत्यनुकूलत्वं धारयति ।

**देवी**—(चित्रमवलोक्यापवार्य च।) हारलदे, पेक्ख । कण्णसुन्दरिं जेव्व आलिहिअ अप्पाणअं विणोदेदि । तुमं तु मम ण पत्तिज्जसि । अहं जेव्व अविमिस्सकारिणित्ति किं भणीअदि । (क)

**हारलता**—तथैव ।

**देवी**—(प्रकाशम् ।) अज्जउत्त, इदं णअणविणोदणं मए आगदुअ विनिवट्टिदं जेव्व । संपदं पेक्खिदव्वम् । (इति सावेगमुत्तिष्ठति ।) (ख)

**राजा**—अलमन्यथा संभावितेन । (इति वारयति ।)

(देव्याक्षिप्य हारलतया सह निष्क्रान्ता ।)

**राजा**—एहि तावत् । देवीप्रसादनाय प्रयतावहे ।

(इति निष्क्रान्ताः सर्वे ।)

**इति प्रथमोऽङ्कः ।**

---

द्वितीयोऽङ्कः ।

(ततः प्रविशति सुप्तोत्थितो विदूषकः ।)

**विदूषकः**—(अङ्गुलीभ्यामक्षिणी मृजन् ।) अज्ज पिअवअस्सेण दिग्घरोसं देविं पसादिअ मे किं पि समादिट्ठम् । तदादिट्ठत्थदूणो मञ्जिट्ठारुणेण अरुणसारहिमण्डलेण सान्दअन्तेण रअणिं जगाविओह्मि । ण सक्कणोमि सअणिज्जादो णिद्दाए वलामोडिमीलिज्जन्तदिट्ठी उट्ठिदुम् । पिअवअस्सचलणवडणसंतुट्ठदेवीपसादलद्धेहिं मोएदहिं पुट्ठभुइट्ठं चिट्ठदि मे उअरम् । णिहुअं अववरअअन्तरे सुवामि । (स्मृतिमभिनीय ।) अहवा कहं सुविअदि । जं पिअवअस्सेण तीए विज्जाहरकण्णआए पउत्तिं जाणिदुं किं सा वि वअस्ससाणुराआ ण वेत्ति आणत्तह्मि । ता जाव गदुअ काए वि अन्तेउरविलासिणीए सआसादो अण्णापदेसेण जाणिस्सम् । कहं उवलतरङ्गा तरङ्गवदित्तिणामहेआ इदो ज्जेव्व आअच्छदि । भोदु । एदाए

---

(क) हारलते, पश्य । कर्णसुन्दरीमेवालिख्यात्मानं विनोदयति । त्वं तु मम न प्रत्ययसे । अहमेवाविमृश्यकारिणीति किं भण्यते ।

(ख) आर्यपुत्र, एतन्नयनविनोदनं मयागत्य विनिवर्तितमेव । सांप्रतं प्रेक्षितव्यम् ।

जेव्व मुहादो जाणिस्सम् । (पुनरवलोक्य ।) मं पेक्खिअ एदाए किं पि अपच्छादिदम् । (निरूप्य सशिरःकम्पम् ।) अत्थि एत्थ वडे जक्खो । भोदु । संभाविअ जाणामि[1] । (इति तथा करोति ।) (क)

(ततः प्रविशति तरङ्गवती ।)

**तरङ्गवती**—(अग्रतोऽवलोक्य ।) एस दुट्ठवडू पेक्खिस्सदि एदं सिसिरोवआरम् । ता अण्णदो गच्छामि । (इति तथा गच्छति ।) (ख)

**विदूषकः**—(सत्वरमुपसृत्य ।) भोदि, कीस अण्णदो गच्छीअदि । अहं तुह ससिलेहाए विअ मग्गं पलोएमि । तुमं राहुं व मं पलिहलसि । किं ण्णेदम् । (ग)

**तरङ्गवती**—अज्ज, कज्जन्तरपज्जाउलहिअअत्तेण ण लक्खिदोसि । पसीददु भवं । (घ)

---

(क) अद्य प्रियवयस्येन दीर्घरोषां देवीं प्रसाद्य मे किमपि समादिष्टम् । तदादिष्टार्थदूनो मञ्जिष्ठारुणेनारुणसारथिमण्डलेन सान्द्रायमाणेन रजनिं जागरितोऽस्मि । न शक्नोमि शयनीयान्निद्रया हठान्मीलद्दृष्टिरुत्थातुम् । प्रियवयस्यचरणपतनसंतुष्टदेवीप्रसादलब्धैर्मोदकैः पुष्टभूयिष्ठं तिष्ठति मे उदरम् । निभृतमपवरकान्तरे स्वपिमि । अथवा कथं सुप्यते । यत्प्रियवयस्येन तस्या विद्याधरकन्यकायाः प्रवृत्तिं ज्ञातुं किं सापि वयस्यसानुरागा न वेत्याज्ञप्तोऽस्मि । तद्यावद्गत्वा कस्या अप्यन्तःपुरविलासिन्याः सकाशादन्यापदेशेन ज्ञास्यामि । कथमुत्पलतरङ्गा तरङ्गवतीतिनामधेया इत एवागच्छति । भवतु । अस्या एव मुखाज्ज्ञास्यामि । मां प्रेक्ष्यैतया किमप्यपच्छादितम् । अस्त्यत्र वटे यक्षः । भवतु । संभाव्य जानामि ।

(ख) एष दुष्टबटुः प्रेक्षिष्यत एतच्छिशिरोपचारम् । तदन्यतो गच्छामि ।

(ग) भवति, कुतोऽन्यतो गम्यते । अहं तव शशिलेखाया इव मार्गं प्रलोकयामि । त्वं राहुमिव मां परिहरासि । किं न्वेतत् ।

(घ) आर्य, कार्यान्तरपर्याकुलहृदयत्वेन न लक्षितोऽसि । प्रसीदतु भवान् ।

---

१. एतावत्पर्यन्तमस्मिन्विदूषकवाक्येऽप्यत्यस्फटं प्राकृतमस्ति.

**विदूषकः**—अह केण वावारेण तत्तभोदी कण्णसुन्दरी वट्टदि । (क)

**तरङ्गवती**—णिअवावारे व्व सा पिअसही । (ख)

**विदूषकः**—को उण णिअवावारो । (ग)

**तरङ्गवती**—देवीए सआसे सिक्खदि लक्खणाणामणुसीलिणानि, अमअणाओ बहुविहाओ लीलाओ वि । (घ)

**विदूषकः**—(विहस्य ।) अवरो को वि वावारो त्ति सुणीअदि । (ङ)

**तरङ्गवती**—(साशङ्कम् ।) क इत्ति णिवेदेदु भवं । (च)

**विदूषकः**—जत्थ एदाणं विणिओओ । (इत्यस्या अंशुकान्तरात्कदलीपत्राणि मृणालिकाश्च लीलया गृह्णाति ।) (छ)

**तरङ्गवती**—अज्ज, ण किं पि सङ्किदव्वम् । एदेहिं मम किं पि कज्जं अत्थि । (ज)

**विदूषकः**—अविस्सासिणि, अलं अवलावेण । णणु पिअवअस्सेण पउत्तिं जाणिदुं पेसिदोह्मि । ता उज्जुअं कहेसु । (झ)

**तरङ्गवती**—अज्ज, रक्खिदव्वं रहस्सम् । (ञ)

---

(क) अथ केन व्यापारेण तत्रभवती कर्णसुन्दरी वर्तते ।

(ख) निजव्यापारैव सा प्रियसखी ।

(ग) कः पुनर्निजव्यापारः ।

(घ) देव्याः सकाशे शिक्षते लक्षणानामनुशीलनानि, अमदना बहुविधा लीला अपि ।

(ङ) अपरः कोऽपि व्यापार इति श्रूयते ।

(च) क इति निवेदयतु भवान् ।

(छ) यत्रैतेषां विनियोगः ।

(ज) आर्य, न किमपि शङ्कितव्यम् । एतैर्मम किमपि कार्यमस्ति ।

(झ) अविश्वासिनि, अलमपलापेन । ननु प्रियवयस्येन प्रवृत्तिं ज्ञातुं प्रेषितोऽस्मि । तदृजुकं कथय ।

(ञ) आर्य, रक्षितव्यं रहस्यम् ।

(इति संस्कृतमाश्रित्य ।)

यत्तारारमणोऽपि निर्वृतिपदं नास्याश्चलच्चक्षुषो-
र्यद्गात्रं शतपत्रपत्रशयनेऽप्युत्फालमुद्वेल्लति ।
शीतं यच्च कुचस्थलीमलयजं धूलीकदम्बायते
किं वान्यत्तदनङ्गमङ्गलमयी भङ्गी कुरङ्गीदृशः ॥ १ ॥

(इत्युक्त्वापसरति ।)

**विदूषकः**—(सपरितोषम् ।) भोदि, सणिओअं असुण्णं करेसु । अहं पि पिअवअस्सं वड्ढावेमि । (क)

(इति निष्क्रान्तौ ।)

**प्रवेशकः ।**

(ततः प्रविशति सोत्कण्ठो राजा विदूषकश्च ।)

**राजा**—

धूमश्यामलितेव तापनवशाच्चामीकरस्य च्छवि-
श्चन्द्रो मुक्त इव श्रिया किसलया निर्धौतरागा इव ।
निःसारेव धनुर्लता रतिपतेः सुप्तेव विश्वप्रभा
तस्याः किं च पुरो विभान्ति कदलीस्तम्भा सदम्भा इव ॥ २ ॥

अपि च ।

मुग्धाक्ष्याः कति नेन्दवः समुदिता वक्त्रे स्फुरत्कान्तयो
विश्रान्तिः कियतां न लोचनयुगे नीलाम्बुजानां श्रियः ।
निष्पन्नः कियता न विद्रुमरुचां सारेण बिम्बाधरः
पीताश्चारुभिरङ्गकैश्च कति न स्निग्धा मधूकत्विषः ॥ ३ ॥

(अनुसंधाय ।)

स्फुरल्लीलामालं किमपि रसयोगान्मृगदृशः
क्षणं दीर्घापाङ्गप्रणयि यदभून्नेत्रयुगलम् ।
अहो हृज्जन्मान्तः स्फुरति बत मे शल्यमिव त-
द्यदावेगे मोहः परमयमविश्रामविषयः ॥ ४ ॥

---

(क) भवति, स्वनियोगमशून्यं कुरु । अहमपि प्रियवयस्यं वर्धयामि ।

अहो, किमपि कमनीये वयसि वर्तते सुमध्यमा । तथा हि ।

आभोगः कृत एव किं तु न गतिस्त्यक्ता कुचाभ्यां द्वयी
भ्रूलास्यैरवकीर्णमेव मिलितं नो किं तु सम्यग्दृशोः ।
लीलाभिः परिरब्धमेव गमनं तन्व्या नितम्बोद्गम-
प्राग्भारेण न किं तु मन्थरपदन्यासस्तदा सूत्रितः ॥ ९ ॥

सखे, अपि सत्यं तरङ्गवत्या वचः ।

**विदूषकः**—एदे क्खु मअणमअतिह्णाविप्पलद्धा कामिणो उम्मत्ता मह पडिहान्ति । जं पच्चक्खे वि विप्पदिवत्तिं कुणन्ति । जदि सव्वधा ण पत्तिज्जसि ता अकरणिज्जं पि करोमि । बह्मणीए चलणेहिं सवामि । (क)

**राजा**—हृदय, दिष्ट्या वर्धसे ।

यस्यां रक्तं किल कलयसि क्रान्तिमत्यर्थमेवं
नूनं वृन्तादिव सरसिजं मज्जदन्तर्हिमाम्भः ।
कृत्वा सद्यः श्रवणयुगलं लोलताटङ्करिक्तं
सापि स्वैरं विशिखखुरली कल्पिता मन्मथेन ॥ १ ॥

('स्फुरल्लीला–'(२१४) इत्यादि पठति ।)

**विदूषकः**—(विहस्य ।) भो, किं पि पुच्छामि । (ख)

**राजा**—किं न पृच्छसि ।

**विदूषकः**—सिणिद्धमुद्धपहाउडणमणुल्लसणमणोहरं हरसुप्फुल्लकवोलमण्डलं संमुहपलोइदं अवगणिअ कण्णन्तिकगामिणिं वङ्कं जेव्व दिट्ठिं कुविदाणं विअ कामिणीणं कामिणो कीस पसंसन्ति । (ग)

---

(क) एते खलु मदनमृगतृष्णाविप्रलब्धाः कामिन उन्मत्ता मम प्रतिभान्ति । यत्प्रत्यक्षेऽपि विप्रतिपत्तिं कुर्वन्ति । यदि सर्वथा न प्रत्ययसे तदकरणीयमपि करोमि । ब्राह्मण्याश्चरणाभ्यां शपामि ।

(ख) भोः, किमपि पृच्छामि ।

(ग) स्निग्धमुग्ध·········मनोहरं हर्षोत्फुल्लकपोलमण्डलं संमुखप्रलोकितमवगणय्य कर्णान्तिकगामिनीं वक्रामेव दृष्टिं कुपितानामिव कामिनीनां कामिनः कुतः प्रशंसन्ति ।

**राजा**—अविदग्धोऽसि । पश्य ।

दीर्घापाङ्गतरङ्गितेन विगलन्नीरं विलोलेक्षणा
　यत्पश्यन्त्यवतंसनालनलिनच्छायामुषा चक्षुषा ।
तुल्यं वाधिकमन्यदेव मदनस्यास्त्रं त्रिलोकीजयि-
　व्यापारोऽस्य न यत्र तत्र किमपि प्रेम्णो हि तल्लक्षणम् ॥ ७ ॥

**विदूषकः**—भो, अण्णं भणामि । जाए कारणादो महन्तेण दुःखेण सअलं जेव्व जामिणिं देवी अब्भत्थिदा सा किं त्ति पुणो वि अणुसंधीअदि । जदि तीए कज्जं ता कि त्ति देवी पीडन्ती अणुणीअदि । अह देवीए कज्जं ता कि त्ति सा अणुसंधीअदि त्ति । (क)

**राजा**—अयि सखे, शृणु ।

जनिमुपगता विश्वप्रख्यातनाम्नि कुले पुनः
　प्रणयविशदा देवी मोक्तुं मया न हि पार्यते ।
कथमवितथश्लाघ्यैरङ्गैरसावपि मुच्यतां
　रचितकवचः पक्षे यस्याः स्थितः कुसुमायुधः ॥ ८ ॥

तत्कथमयं विरहदाहो मया गमयितव्यः ।

**विदूषकः**—सव्वधा पिअवअस्सो असुहिदो त्ति करुणं उप्पाइअ सत्थिवाअणपुव्वअं अणुणीअ सा समप्पीअदु त्ति देविं पुच्छेमि । (ख)

**राजा**—मूर्ख,

नैवं कथंचन कृतानुनयापि देवी
　मन्येत मन्युकलुषा मयि केवलं स्यात् ।

---

(क) भोः, अन्यद्भणामि । यस्याः कारणान्महता दुःखेन सकलामेव यामिनीं देव्यभ्यर्थिता सा किमिति पुनरप्यनुसंधीयते । यदि तया कार्यं तत्किमिति देवी पीड्यमानानुनीयते । अथ देव्या कार्यं तत्किमिति सानुसंधीयत इति ।

(ख) सर्वथा प्रियवयस्योऽसुखित इति करुणामुत्पाद्य स्वस्तिवायनपूर्वकमनुनीय सा समर्प्यतामिति देवीं पृच्छामि ।

स्थातुं सुशक्यमनले पतितुं कृपाण-
धारासु वा न तु जनं दयितं विमोक्तुम् ॥ ९ ॥

तत्कायमात्मा विनोदयितव्यः ।

**विदूषकः**—भो, तत्थ ज्जेव्व उज्जाणे गच्छीअदु । तत्थ तरङ्गसाल-ब्भन्तरे चित्तगदं पलोअन्तो सुहं पाविहिसि । (क)

**राजा**—सखे, युक्तमुक्तम् । तदुपदिश पन्थानम् ।

**विदूषकः**—इदो इदो । (इति परिक्रामति ।) एसा तरङ्गसाला अलंक-रीअदु । (ख)

(उभौ तथा कुरुतः ।)

**विदूषकः**—(सर्वतोऽवलोक्य ।) भो, कहिं सा सामलङ्गी अणङ्गदेवदा आलिहिदा । अह वा अहं चम्मचक्खू ण पेक्खामि । (ग)

**राजा**—(निःश्वस्य ।)कथमुत्प्रोञ्छितं तदनङ्गशस्त्रम् । अहो निर्दया देवी ।

सिद्धक्षेत्रमिवाङ्गनाकुलगुरोर्लावण्यसारोच्चय-
श्रीसंकेत इव त्रिलोकनयनप्रीतेरिवैको निधिः ।
धातुश्चन्द्रसहस्रसंग्रह इव द्रष्टुं तदेणीदृशो
वक्रं चित्रनिविष्टमप्यसुलभं कोऽयं विरुद्धो विधिः ॥ १० ॥

(विचिन्त्य ।)

विद्वांस्ततो लिखितुमिन्दुमुखीं विदग्धः
कोऽन्यो विना कुसुमचापमनल्पशिल्पः ।
नूनं तदा तदनुबन्धिभिरिन्द्रजाल-
मुन्मीलितं किमपि मे पुरतो विकल्पैः ॥ ११ ॥

(इति शोकं नाटयति ।)

---

(क) भोः, तत्रैवोद्याने गम्यताम् । तत्र तरङ्गशालाभ्यन्तरे चित्रगतां प्रलोकयन्सुखं प्राप्स्यसि ।

(ख) इत इतः । एषा तरङ्गशालालंक्रियताम् ।

(ग) भोः, कुत्र सा श्यामलाङ्ग्यनङ्गदेवतालिखिता । अथ वाहं चर्मचक्षुर्न पश्यामि ।

**विदूषकः**—भो, किं एत्थ सुण्णदेउले। एहि। लीलावणब्भन्तरे परिब्भमामो। कदा वि कथं वि कुसुमाओ उच्चिणन्ती लदाओ सिञ्चन्ती वा सरसीजलम्मि ण्हाणविधिं करन्ती वा सा हुविस्सदि। (क)

**राजा**—कुत एवंविधा भाग्यसंपदः। तथापि पश्चात्तापव्यपनयनाय तदपि विधीयताम्।

(इति तथा कुरुतः।)

**विदूषकः**—(अग्रतो विलोक्य।) पेक्ख केलिकमलिणीसणुम्मि।

विच्छोडन्तो णिअमुहगदं चक्कवाआण चक्कं
देन्तो णिद्दारसमसमये सव्वदो पङ्कआणम्।

(अग्रतोऽवलोक्य।)

तारं तीरप्फुरिदकिरणो लोअणानन्दवल्ली-
कन्दो चन्दो रचअदि जले मज्जणुम्मज्जणाइं॥ १२॥ (ख)

**राजा**—(विलोक्य।)

परं मैत्रीपात्रं त्रिभुवनजिगीषोः स्मृतिभुवः
स एवायं यूनामविनयकथोन्मुद्रणगुरुः।

(विचिन्त्य।)

गतः किं वा दैवाद्धत बत कलङ्कोऽस्य नियतं
सुधामुग्धैर्धौतः कमलसरसीवीचिनिचयैः॥ १३॥

(सोत्प्रेक्षम्।)

तस्याः कुरङ्गकदृशो युगपन्मुखेन
दोषाकरश्च कमलानि च निर्जितानि।

---

(क) भोः, किमत्र शून्यदेवकुले। एहि। लीलावनाभ्यन्तरे परिभ्रमावः। कदापि कथमपि कुसुमान्युच्चिन्वती लताः सिञ्चन्ती वा सरसीजले स्नानविधिं कुर्वती वा सा भविष्यति।

(ख) पश्य केलिकमलिनी……।

वियोजयन्निजमुखगतं चक्रवाकाणां चक्रं
ददन्निद्रारसमसमये सर्वतः पङ्कजानाम्।
तारं तीरस्फुरितकिरणो लोचनानन्दवल्ली-
कन्दश्चन्द्रो रचयति जले मज्जनोन्मज्जनानि॥

एतानि शाश्वतिकमप्यपहाय वैरं
स्वैरं तदत्र रचयन्ति विधेयचिन्ताम् ॥ १४ ॥

**विदूषकः**—

रोहिणिवअणालिङ्गणणिब्भरसंकन्तपरिमलुग्गारम् ।
ण मुअन्ति कुमुअबन्धवबिम्बं परिलम्बिआ भमरा ॥ १५ ॥ (क)

**राजा**—(निपुणं निरूप्य । सहर्षम् ।)

सखे नायं खेलंस्तिलकयति चन्द्रः कुमुदिनी-
मदः कंदर्पाज्ञास्फुरणगुरुवक्रं मृगदृशः ।
कुलं रोलम्बानामिदमपि न लग्नं परिमला-
दयं वेणीदण्डः शिखिन इव बर्हस्तरलितः ॥ १६ ॥

अपि च ।

आभात्यमर्त्यतरुपत्रसगोत्रपाणिः
सेयं मृगाङ्कवदना मदनास्त्रमत्र ।
हेतोः कुतोऽपि कमला कमलान्तराला-
न्निर्गत्य संयमवती पयसि स्थितेव ॥ १७ ॥

**विदूषकः**—(सकौतुकम् ।)

ण वरकबरी गोरङ्गीए तरङ्गिदविब्भमा
भमरणिवहो आमोदाणं ससिम्मि ण संगदो ।
अवि कमलिणीसंकन्तेणं विलासहरेण सा
कणअकमलुक्किण्णा जादा मुहेण जलन्तरे ॥ १८ ॥ (ख)

---

(क) रोहिणीवदनालिङ्गननिर्भरसंक्रान्तपरिमलोद्गारम् ।
न मुञ्चन्ति कुमुदबान्धवबिम्बं परिलम्बिता भ्रमराः ॥

(ख) न वरकबरी गौराङ्ग्यास्तरङ्गिताविभ्रमा
भ्रमरनिवह आमोदेन शशिनि न संगतः ।
अपि कमलिनीसंक्रान्तेन विलासधरेण सा
कनककमलोत्कीर्णा जाता मुखेन जलान्तरे ॥

**राजा**—

पुष्पेषोरभिषेकयोग्यमथ वा भर्गाग्निमग्नात्मनः
प्रत्युज्जीवनमेतदम्बुजसरः कम्बुप्रसन्नच्छवि ।
यत्त्वाम्रेडितशीतरश्मिकिरणस्यन्दोपमेनामुना
लावण्यामृतनिर्झरेण सुतनोर्यत्पात्रतां नीयते ॥ १९ ॥

अपि च ।

आश्चर्यं फलितं सरोरुहवने स्थित्वा चिरेण श्रियः
कान्तिः कान्तिसुधाद्रवेण सुतनोर्याता यदत्राधुना ।
सान्द्रप्रेमवशीकृतस्य नियतं कौमोदकीलक्ष्मणः
साप्यङ्के गिरिजेव मन्मथरिपोः कामास्त्रमुत्स्रक्ष्यति ॥ २० ॥

**विदूषकः**—वणाणिलवेल्लिदविद्दुमकिसलअसरिच्छपप्फुरिदाहरोट्ठी अङ्गुलिविवत्तणमणोहरकरपल्लवा णासग्गलग्गअविसट्ठकन्दोट्टसलोणलोअणा जादा । (क)

**राजा**—

स्फुरति यदयं दन्तज्योत्स्नाविलासधरोऽधरः
करकिसलयौ मुद्रायोगाद्यदुच्चलिताङ्गुली ।
मुकुलनविधिर्यन्नीलाब्जद्विषोरपि चक्षुषो-
स्तदियमबला ध्यायत्यन्तः किमप्यधिदैवतम् ॥ २१ ॥

**विदूषकः**—(सकौतुकम् ।) भो, कीस एसा सुण्णं पुणो पुणो पाणिं णीरमज्झादो आअट्ठदि । (ख)

**राजा**—(दृष्ट्वा ।)

सुतनुरनवलोकयन्त्युपान्ते स्थितमपि काञ्चनकुम्भमम्बुपूर्णम् ।
क्वचिदपि गतमानसा करेण स्पृशति कुचप्रतिबिम्बमम्बुमध्ये ॥ २२ ॥

---

(क) वनानिलवेल्लितविद्रुमकिसलयसदृक्षप्रस्फुरिताधरोष्ठी अङ्गुलिविवर्तनमनोहरकरपल्लवा नासाग्रलग्नाविसपष्टनीलोत्पलसलावण्यलोचना जाता ।

(ख) भोः, कस्मादेषा शून्यं पुनः पुनः पाणिं नीरमध्यादाकर्षति ।

(सस्पृहम् ।)

ताम्बूलावरणोज्झिते विकसितं रागेण बिम्बाधरे
मज्जत्कज्जलकालिकेन कलिता कापि च्छविश्चक्षुषा ।
श्रीरन्यैव निरङ्गरागसुभगेऽप्यङ्गे कुरङ्गीदृशो
विश्राम्यत्वधुना धनुर्विजयते कं नाम नैव स्मरः ॥ २३ ॥

**विदूषकः**—(विलोक्य ।) कहं एसा णिव्वत्तिदपव्वदीचरणसुस्सूसा इमादो कमलसरादो णिग्गदा रहसि सहीए सह लदागुम्मन्तरे पविट्ठा ।(क)

**राजा**—

धूपांशुकेन शनकैः परिमृज्यमान-
वेणीगुणा प्रणयपूर्वमुपेत्य सख्या ।
मध्ये मधुद्रुमवनं वनदेवतेव
तन्वी विवक्षुरिव किंचिदिहोपविष्टा ॥ २४ ॥

(सहर्षम् ।) सखे, सुव्यक्तानि विरहचिह्नानि । तथा हि ।

दग्धासन्नलतावलीकिसलयः श्वासानिलानां चयो
बाष्पाम्भःस्रुतिरालवालकलनायोग्या तरूणामधः ।
तापो निर्मृदिताब्जिनीदलचयः कोऽप्यङ्गकानां गुरु-
र्दूर्वाकाण्डविडम्बिपाण्डिमघनं किं चाननं सुभ्रुवः ॥ २५ ॥

**विदूषकः**—सुलक्खिदं पिअवअस्सेण ।

[1]णीसासाहिणवप्पहारवलिदा कामस्स णूणं सरा
........................................................ । (ख)

(क) कथमेषा निर्वर्तितपार्वतीचरणशुश्रूषास्मात्कमलसरसो निर्गता रहसि सख्या सह लतागुल्मान्तरे प्रविष्टा ।

(ख) सुलक्षितं प्रियवयस्येन ।

निःश्वासाभिनवप्रहारवलिता कामस्य नूनं सरा
........................................................ ।

१. आदर्शपुस्तकेऽस्य श्लोकस्य पादमात्रमेवास्ति.

........................................................
.....................................................॥ २६ ॥

**राजा**—सखे, अस्यैव लतागहनस्य पश्चात्स्थित्वा शृणुवस्तावदस्या विश्रम्भभाषितानि ।

(इति तथा कुरुतः ।)

(ततः प्रविशति यथानिर्दिष्टा नायिका सखी च ।)

**सखी**—किं एव्वं रोदिअदि । एसा भअवदी भवाणी पणदजणवच्छला णिच्चिअं तुह इच्छं पूरइस्सदि । (क)

**नायिका**—

को जाणादि कदा हुविस्सदि फलं चन्दद्धचूडामणि-
प्पाणेसाचलणप्पसादतरुणो भत्तीअ सित्तस्स वि[1] ।
मुज्झन्ती मअणाणलेन वहलं साहं हदासा पुणो
दाणिं जेव्व तहिं चरामि परमं जं जं अवत्थन्तरम् ॥ २७ ॥

अवि अ ।

आसण्णो मअलञ्छणो ण वअणो दुद्धेण धोएव्व सा
दिट्ठी सामलगोरमुद्धलडहं तं तस्स रूवं पडु ।
झाणे झत्ति जधा परिप्फुरदि मे कच्चाइणीणो तधा
णो जाणे जदि जीवइस्सदि उमा कण्णा विपण्णेत्ति माम् ॥२८॥(ख)

---

(क) किमेवं रुद्यते । एषा भगवती भवानी प्रणतजनवत्सला निश्चितं तवेच्छां पूरयिष्यति ।

(ख) को जानाति कदा भविष्यति फलं चन्द्रार्धचूडामणि-
प्राणेशाचरणप्रसादतरोर्भक्त्या सिक्तस्यापि ।
मुह्यन्ती मदनानलेन बहुलं साहं हताशा पुन-
रिदानीमेव तत्र चरामि परमं यद्यदवस्थान्तरम् ॥

अपि च ।

आसन्नो मृगलाञ्छनो न वदनं दुग्धेन धौतेव सा
दृष्टिः श्यामलगौरमुग्धलटभं तत्तस्य रूपं पटु ।

---

१. 'वा' इत्यादर्शपुस्तकपाठः.

**सखी**—णं तस्सिं पि संणद्धो मअरद्धओ त्ति किंत्ति उत्तमीअदि । (क)

**नायिका**—सहि, अलं आसासणसीलदाए । (ख)

**सखी**—णं जो सो तस्स महाभाअस्स कदे पच्छावइदुमाढत्तो सिलोओ ण किं विरइअदि । (ग)

**नायिका**—तुमं जेव्व सक्का सिलोअजुअलं करेसु । मह मम्महरससंकप्पविकप्पेहिं अन्तरिज्जदि पणिधाणदिट्ठी । (घ)

**सखी**—(नातिचिरात्स्थित्वा ।) सहि, अवधारेसु । (संस्कृतमाश्रित्य ।) (ङ)

नीरागा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे
खिन्ना कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः ।
चित्रं दुःसहदाहदायिनि धृतद्वेषापि पुष्पायुधे
मुग्धाक्षी सुभग त्वयि प्रतिपदं प्रेमाधिकं पुष्यति ॥ २९ ॥

अपि च ।

प्रोतेति प्रतिबिम्बितेति घटितेत्यास्थानशालामणि-
स्तम्भन्यस्तभरामपि प्रियसखीवर्गो न जानाति ताम् ।
अङ्गेनोत्पुलकेन किं तु सुचिरं गीतं कुरङ्गीव सा
तन्वङ्गी तव शृण्वती नयनजैरम्भोभिरुन्नीयते ॥ ३० ॥

---

ध्याने झटिति यथा परिस्फुरति मे कात्यायन्यास्तथा
नो जाने यदि जीवयिष्यत्युमा कन्या विपन्नेति माम् ॥

(क) ननु तस्मिन्नपि संनद्धो मकरध्वज इति किमित्युत्ताम्यते ।

(ख) सखि, अलमाश्वासनशीलतया ।

(ग) ननु यः स तस्य महाभागस्य कृते प्रस्तावयितुमारब्धः श्लोको न किं विरच्यते ।

(घ) त्वमेव शक्ता श्लोकयुगलं कुरुष्व । मम मन्मथरससंकल्पविकल्पैरन्तर्यते प्रणिधानदृष्टिः ।

(ङ) सखि, अवधारय ।

**नायिका**—सहि, साहु विरइदम्। सरसकइत्तणेण परभूमिमारोविदो विप्पलम्भो। (क)

**राजा**—प्रिये, अन्तरङ्गासि काव्योपनिषदाम्।

**नायिका**—सहि, मए वि विरइदो संदेसो। (ख)

**सखी**—कीरिसो। गण्डूसेहि सवणाइं रसदाणेण। (ग)

**नायिका**—

किं चन्दो तह चन्दणव्व सिसिरो किं वल्लईपञ्चमो
कण्णे वल्लहसंगमो मणसिजो किं वा सपक्खट्ठिदो।
दिट्ठी किं कमलेसु रज्जदि मणं किं णाम मे दक्खिणो
सो वा दक्खिणमारुदो जइ तुए मज्झत्थमालम्बिदम्॥ ३१ ॥(घ)

**विदूषकः**—भो, एण्हिं पत्तिज्जसि। (ङ)

(राजा मोदते।)

**सखी**—सहि, णिअदसाणिवेदणगब्भणिब्भरं दढं उपलद्धो भट्टा। (च)

**नायिका**—एवं सुणीअ किं पडिपज्जदि। (छ)

---

(क) सखि, साधु विरचितम्। सरसकवित्वेन परभूमिमारोपितो विप्रलम्भः

(ख) सखि, मयापि विरचितः संदेशः।

(ग) कीदृशः। गण्डूषय श्रवणे रसदानेन।

(घ) किं चन्द्रस्तथा चन्दन इव शिशिरः किं वल्लकीपञ्चमः
कर्णे वल्लभसंगमो मनसिजः किं वा सपक्षास्थितः।
दृष्टिः किं कमलेषु रज्यति मनाक्किं नाम मे दाक्षिणः
स वा दक्षिणमारुतो यदि त्वया माध्यस्थ्यमालम्बितम्॥

(ङ) भोः, अधुना प्रत्याय्यसे।

(च) सखि, निजदशानिवेदनगर्भनिर्भरं दृढमुपालब्धो भर्ता।

(छ) एवं श्रुत्वा किं प्रतिपद्यते।

**सखी**—किं अण्णम् ।

जं जलरासिसुताए णवरसतण्हाउलेण कण्हेण ।
ससिहण्डमण्डणेण वि पडिवण्णं जं च गोरीए ॥ ३२ ॥ (क)

**नायिका**—अवि ण कहिं पि अवहीरस्सदि सखी । (ख)

**सखी**—(विहस्य ।)

तुम्हारिसीओ॑ परिहवविसअम्मि कहं व वज्जन्ति ।
किज्जउ कहं विअ फुडं णिअडाहि॑ सुहाइदं दूरे ॥ ३३ ॥ (ग)

**नायिका**—(सोत्कलिकं संस्कृतमाश्रित्य ।)

जाने सखि स्मरशिखिज्वलिता जनस्य
तस्य व्रजामि निकटं परिभूय लज्जाम् ।
पश्चाद्यथाभिरुचितं विदधातु देवी
किं दुःसहं विरहपावकतोऽपि वा स्यात् ॥ ३४ ॥

**विदूषकः**—भो, ण जुत्तं दाणिं पडिवालणम् । उपसरीअदु । (घ)

**राजा**—मूर्ख, किं तरलोऽसि ।

**सखी**—सहि, किं उत्तावलासि । तारिसाइं जेव्व तुह लक्खणाइं जेहिं किं ण संभावीअदि । (ङ)

**नायिका**—ईरिसाइं मह भाअधेआइं जेण मिच्चुसंभावणा । (इति संस्कृतमाश्रित्य ।) (च)

---

(क) किमन्यत् ।

यज्जलराशिसुताया नवरसतृष्णाकुलेन कृष्णेन ।
शशिखण्डमण्डनेनापि प्रतिपन्नं यच्च गौर्या ॥

(ख) अपि न कुत्राप्यवधीरयिष्यति(?) सखी ।

(ग) युष्मादृश्यः परिभवविषये कथमिव व्रजन्ति ।
क्रियतां कथमिव स्फुटं निगडैः सुखायितं दूरे ॥

(घ) भोः, न युक्तमिदानीं प्रतिपालनम् । उपस्त्रियताम् ।

(ङ) सखि, किमाकुलासि । तादृशान्येव तव लक्षणानि यैः किं न संभाव्यते ।

(च) ईदृशानि मम भागधेयानि यैर्मृत्युसंभावना ।

गुर्वीं धुरं दुरभियोगनिधिर्मनोभू-
रारूढवानविषये मनसोऽनुबन्धः ।
बन्धुर्न कश्चिदपि निघ्नतया स्थितिश्च
हा निश्चितं मरणमेव ममेह जातम् ॥ ३५ ॥

(इति मोहमुपगच्छति ।)

**विदूषकः**—भो, पमादो पमादो । मए पढमं जेव्व आअक्खिदं उपसप्पीअदु त्ति । (क)

(राजा ससंभ्रममुपसर्पति ।)

**सखी**—विजयताम् ।

**विदूषकः**—अब्बह्मण्णं अब्बह्मण्णम् । (ख)

**सखी**—महाराअ, हत्थेण फंसीअदु जेण चेअणं पावेदि । (ग)

**राजा**—(तथा कुर्वन् ।)

विलोलत्वं चक्षुः स्पृशति मुकुलावस्थमपि य-
दुरस्विद्यन्मध्यं कुचकलशयोरुच्छ्वसिति यत् ।
प्रसीदत्युद्दामा यदपि वदनश्रीः सपुलकं
तदेतस्याः संज्ञा ध्रुवमभिमुखी पक्ष्मलदृशः ॥ ३६ ॥

(पुनरवलोक्य ।) अहो सर्वावस्थाभिरव्यवधीयमानं रामणीयकमस्याः । तथा हि ।

भ्रूलेखा विनिवृत्तनृत्तरचना मुक्ताञ्चनोदञ्चन-
व्यापारा कुसुमास्त्रकार्मुकलतामुष्याः सगोत्रीकृता ।
मीलल्लीलमुपैति लोचनयुगं निद्रालुनीलोत्पल-
स्पर्धी श्वासकदर्थितोऽपि भजते बिम्बाधरः स्वां धुरम् ॥ ३७ ॥

**विदूषकः**—भोदी मम पिअवअस्सहत्थेण फंसिज्जन्ती कहं ण चेअणं पडिवज्जदि । (घ)

---

(क) भोः, प्रमादः प्रमादः । मया प्रथममेवाख्यातमुपसृप्यतामिति ।

(ख) अब्रह्मण्यमब्रह्मण्यम् ।

(ग) महाराज, हस्तेन स्पृश्यतां येन चेतनां प्राप्नोति ।

(घ) भवती मम प्रियवयस्यहस्तेन स्पृश्यमाना कथं न चेतनां प्रतिपद्यते ।

**राजा**—(सानन्दमात्मगतम् ।)

मग्नं मृगाङ्कसरसीव सुधानिधाने
गर्भे निषण्णमिव पङ्कजकैरवाणाम् ।
अप्यत्र यन्त्रविनिपीडितपारिजात-
निःस्यन्दधौतमिव निर्वृतिमेति चेतः ॥ ३८ ॥

**सखी**—सहि, एदेण हत्थफंसेण ण उच्छससि त्ति अहो दे कठि-णत्तणम् । (क)

**नायिका**—(किंचित्समाश्वस्य ।) अम्मो, किंत्ति रसाअणसित्तेव्व णि-व्वुदिं उव्वहामि । एसो जिआअणो कङ्क्षिदो जणो । (इति किंचिद्दृष्ट्वा सल-ज्जमास्ते ।) (ख)

**राजा**—

वद सुवदने किं व्यामोहः समाश्वसिहि द्रुतं
प्रणयिनि जने किं प्रत्याशाविरोधि विचेष्टितम् ।
नय नयनयोरातिथ्यं मा मनोभववागुरा
परिचरतु मां नीलाम्भोजस्रजः कलयान्विता ॥ ३९ ॥

**विदूषकः**—भोदि, किं ण अलिअणिद्दा विद्दावीअदि । पिअवअस्सो एव्वं दीणत्तणं दंसेदि । (ग)

**सखी**—(सहासम् ।) किंत्ति पडिपत्तिमूढदा अङ्गीकदेत्ति । (एनां बला-दानीय राजान्तिकमुपवेशयति ।) (घ)

---

(क) सखि, एतेन हस्तस्पर्शेन नोच्छ्वसिसीत्यहो ते कठिनत्वम् ।

(ख) अहो, किमिति रसायनसिक्तेव निर्वृतिमुद्वहामि । एष जीवनः काङ्क्षितो जनः ।

(ग) भवति, किं नालीकनिद्रा विद्राव्यते । प्रियवयस्य एवं दीनत्वं द-र्शयति

(घ) किमिति प्रतिपत्तिमूढता अङ्गीकृतेति ।

**नायिका**—(सकृतककोपम् ।) अवेहि पडिहासशीले । (इति सासूयम-[१]वलोकयति ।) (क)

**राजा**—

इयं यदालोकयति त्रपानता दृशा नवेन्दीवरदामदीर्घया ।
तदन्यदेवाभ्यधिकं रसायनादवैमि पुष्पायुधदेहदोहदम् ॥ ४० ॥

(इति पटाञ्चले मृशन् ।)

नायं जनः किमु परिच्छदमध्यमास्ते
यल्लज्जया ननु तनूदरि मुद्रितासि ।
आलिङ्ग मां परिचितानि चिराद्भवन्तु
देहे हरिन्ति हरिचन्दनपल्लवानि ॥ ४१ ॥

(इत्यालिङ्गितुमिच्छति ।)

**नायिका**—(स्वगतम् ।) हिअअ, मणोरहाणं वि उपरि वट्टसि । (ख)

**सखी**—दिज्जउ एदाणं वीसम्भगोट्ठी । (इति शनकैः किंचिदपसरति ।) (ग)

**विदूषकः**—भोदि, एसा देवी आगदा । (घ)

(सखी ससंभ्रमं निवर्तते । नायिका सभयमुत्तिष्ठति ।)

**राजा**—(सशङ्कं दिशोऽवलोक्य ।) मूर्ख, क्वासौ ।

**विदूषकः**—भो, तत्तभोदिं कण्णसुन्दरिं उद्दिसिअ देवी उज्जाणमलंकरेदित्ति भणिदम् । (ङ)

**राजा**—(अग्रतोऽवलोक्य ।) कथं सत्यमेवागता देवी । अहो ब्रह्मबन्धोरमुष्य फलितमङ्गलेन ।

---

(क) अपेहि परिहासशीले ।

(ख) हृदय, मनोरथानामप्युपरि वर्तसे ।

(ग) दीयतामेतयोर्विस्रम्भगोष्ठी ।

(घ) भवति, एषा देव्यागता ।

(ङ) भोः, तत्रभवतीं कर्णसुन्दरीमुद्दिश्य देव्युद्यानमलंकरोतीति भणितम् ।

---

१. 'सास्रमवलोकयति' इत्यादर्शपुस्तकपाठः.

**नायिका**—(विलोक्य । आत्मगतम् ।) अणब्भए इदं वज्जपडणं पेक्खिदम् । (क)

**सखी**—महाराअ, सुमरिदव्वो अअं जणो । संपदं अण्णदो गच्छह्म । (ख)

**विदूषकः**—अह्मे वि एव्वं जेव्व करेह्म । (ग)

(नायिका सख्या सह निष्क्रान्ता ।)

**राजा**—(निश्वस्य ।)

कथमपि दिवः पुञ्जीभूय च्युतामिव कौमुदीं
कुमुदसुहृदः प्राप्य प्राणाधिकां विधिकारणात् ।
अहरहरहो प्राप्तं लीलारसोर्मिषु मज्जता
क्षणमपि मया न स्वातन्त्र्यं किमत्र विधीयताम् ॥ ४२ ॥

(ततः प्रविशति देवी हारलता च ।)

**हारलता**[1]—कहं भट्टावि इह ज्जेव्व । (घ)

**देवी**—राअकज्जविरहे इमस्सिं काले इह ज्जेव्व दिणं णिव्विण्णो विणोदइ अज्जउत्तो अत्ताणअं त्ति । (ङ)

**राजा**—अपि विज्ञातोऽहं देव्या ।

**विदूषकः**—तधा कुविआ वअस्सेण अणुणीदा कधं विप्पदीवं पसज्जिअ अनुसरिस्सदि । (च)

---

(क) अनभ्रे इदं वज्रपतनं प्रेक्षितम् ।

(ख) महाराज, स्मर्तव्योऽयं जनः । सांप्रतमन्यतो गच्छावः ।

(ग) आवामप्येवमेव कुर्वः ।

(घ) कथं भर्तापीहैव ।

(ङ) राजकार्यविरहेऽस्मिन्काले इहैव दिनं निर्विण्णो विनोदयत्यार्यपुत्र आत्मानमिति ।

(च) तथा कुपिता वयस्येनानुनीता कथं विप्रतीपं प्रसज्ज्यानुसरिष्यति ।

---

१. आदर्शपुस्तकसंशोधकेन हारलतास्थाने देवी, देवीस्थाने च हारलता इति पदं शोधितमस्ति.

**राजा**—तदितोऽभ्यन्तरमेव व्रजावः ।

(इति निष्क्रान्ताः सर्वे ।)

द्वितीयोऽङ्कः ।

---

तृतीयोऽङ्कः ।

(ततः प्रविशतश्चेट्यौ ।)

**एका**—सहि बउलावलि, सो ण हु बन्धवो भणीअदि जस्सिं हिअअम्मि विअ णीसङ्कदाए ण रहस्सं संचारीअदि । ता कहेसु कीसु तुअं देवीए वासे मन्तअन्ती आसि । (क)

**बकुलावली**—सहि मन्दोअरि, ण अत्थि मम वीसासो । तुअं चावलभावेण विसुमरिअ कस्स पि पुरदो कहिस्ससि त्ति ण आवेदेमि । जदि कुप्पसि ता एवं णिवेदीअदि । परं मन्तभेदो रक्खिदव्वो । (ख)

**मन्दोदरी**—अविस्सासिणि, कहेसु । (ग)

**बकुलावली**—सहि, भट्टा विज्जाहरकण्णाए अणुरत्तचित्तो, परं देवीकारणेण किं पि कादुं ण सक्कुणोदित्ति सव्वगदो पवादो । किं तु भट्टदारिआए कलहाअन्तो अवलावं करेदि । अज्ज क्खु पिअन्तअकेण अज्जबादराअणेण अन्तेउरसालाए पच्छादो णिहुअं हुविअ अज्ज पओसे परिकलिअमअणुज्जाणए संकेदो गहिदो अवअं मन्तिदं ण वेत्ति विरहलेहो अ णिअकरे कदो । देवीए सव्वं पि सुणिअ अहं भणिदा अज्ज मए कण्णसुन्दरीरूएण तुए तीअ सहीरूएण गदुअ अज्जउत्तो वञ्चिदव्वो । ता एदाए वत्ताए रक्खणं कदुअ उअअरणं सज्जीकरेसु त्ति । (घ)

---

(क) सखि बकुलावलि, स न खलु बान्धवो भण्यते यस्मिन्हृदय इव निःशङ्कतया न रहस्यं संचार्यते । तत्कथय कस्मात्त्वं देव्या वासे मन्त्रयन्ती आसीः ।

(ख) सखि मन्दोदरि, नास्ति मम विश्वासः । त्वं चापलभावेन विस्मृत्य कस्यापि पुरतः कथयिष्यसीति नावेदयामि । यदि कुप्यसि तदेवं निवेद्यते । परं मन्त्रभेदो रक्षितव्यः ।

(ग) अविश्वासिनि, कथय ।

(घ) सखि, भर्ता विद्याधरकन्यायामनुरक्तचित्तः, परं देवीकारणेन कि-

मन्दोदरी—अहो, संकडे पडिदो महाराओ । (इत्यग्रतोऽवलोक्य ।) एसो भट्टा लच्छीसणाहो णूणं एत्थ रमणपगीवएतंव ज्जेव पडिपालअन्तो चिट्ठदि । ता एहि गच्छामो । जाव अह्मे पेक्खिअ ण किं पि उप्पिस्सदि । (क)

(इति निष्क्रान्ते ।)

प्रवेशकः।

(ततः प्रविशति यथानिर्दिष्टो राजा ।)

राजा—

न स्वेच्छागतयोऽपि साचिवलनावैचित्र्यशून्या दृशो
नाधौताधरकान्ति संस्तुतजनालापेऽपि लीलास्मितम् ।
वाचां विस्मरणेऽपि न व्यवहिता विच्छित्तिसंक्रान्तय-
स्तात्पर्यं मदनेन दर्शितमहो वैदग्ध्यदीक्षाविधौ ॥ १ ॥

अपि च ।

तद्वक्त्रेण विलुप्तकान्तिमहिमा वर्णोज्झितः शर्वरी-
मब्रह्मण्यमिव प्रसारितकरः कृत्स्नां विधत्ते विधुः ।
अप्याविष्कृतपत्रमुत्पलवनं तल्लोचनेन्दीवर-
च्छायारिक्थमिव द्विरेफपटलीवाचालमाकाङ्क्षते ॥ २ ॥

---

मपि कर्तुं न शक्नोतीति सर्वगतः प्रवादः । किं तु भर्तृदारिकया कलहायमानोऽपलापं करोति । अद्य खलु प्रिय..............आर्यबादरायणेनान्तःपुरशालायाः पश्चान्निभृतं भूत्वाद्य प्रदोषे परिकलितमदनोद्यानके संकेतो गृहीतः.........मन्त्रितं न वेति विरहलेखश्च निजकरे कृतः । देव्या सर्वमपि श्रुत्वाहं भणिता अद्य मया कर्णसुन्दरीरूपेण त्वया तस्याः सखीरूपेण गत्वार्यपुत्रो वञ्चयितव्यः । तदस्या वार्ताया रक्षणं कृत्वोपकरणं सज्जीकुरुष्वेति ।

(क) अहो, संकटे पतितो महाराजः । एष भर्ता लक्ष्मीसनाथो नूनमत्र रमण.............एव प्रतिपालयंस्तिष्ठति । तदेहि गच्छावः । यावदावां प्रेक्ष्य न किमपि............ ।

(इति साङ्गभङ्गम् ।)

तत्पादद्वितयस्य दास्यमपि न प्राप्नोति पङ्केरुहं
तद्भ्रूभङ्गविनिर्जितं स्मरधनुर्नम्रं सदा तिष्ठति ।
इन्दुः किं दुरतिक्रमस्य कुरुतां धातुः सुधासूतिर-
प्यङ्कं तन्मुखकिंकरत्वपिशुनं धत्ते सहोत्थं यतः ॥ ३ ॥

(स्मरणमभिनीय ।)

प्रायो दास्यति नो पयोधरतटी गन्तुं पुरस्तादिति
ध्यानेनेव चकास्ति साचिगमने शिक्षारसश्चक्षुषोः ।
अन्तः स्थानमिव स्मरैकसुहृदः कस्यापि दातुं बहि-
र्निर्गन्तुं हृदयादपि स्तनयुगं विस्तारि संनह्यति ॥ ४ ॥

अपि च ।

कान्तिः कापि कपोलयोः परिणमत्तालीदलस्पर्धिनी[1]
वर्धन्ते मधुपावलीवलयिनः श्वासानिलाः संततम् ।
कार्श्यस्यावरणं तरङ्गितगतैर्लावण्यमेवाङ्गके[2]
सारङ्गायतचक्षुषः किमथवा सर्वं नवीनायते ॥ ५ ॥

अपि च ।

कंदर्पदैवतनिकेतनवैजयन्ती
यान्ती विलासरसमन्थरमुत्पलाक्षी ।
दृष्टिं निवेदितवती मयि कालकूट-
लेशान्धकारितसुधालहरीविचित्राम् ॥ ६ ॥

(सनिःश्वासम् ।) तत्किमद्यापि चिरयति वयस्यः ।

विज्ञातेङ्गितया तरङ्गितघनक्रोधानुषङ्गं धृतः
किं देव्या प्रतिपालयन्परिजनं तस्याः क्वचित्सुभ्रुवः ।
खेदं सैव सखेलवारणगतिर्न प्रापिता चेति मे
चेतः सान्द्रसमुल्लसन्नवनवोल्लेखं मुहुस्ताम्यति ॥ ७ ॥

(प्रविश्य ।)

**विदूषकः**—दिट्ठिआ वड्ढसि कज्जसिद्धीए । (क)

(क) दिष्टया वर्धसे कार्यसिद्ध्या ।

१. 'वनस्पर्धिनी' इत्यादर्शपुस्तकपाठः. २. 'गतैर्' इत्यादर्शे पाठः.

**राजा**—(सहर्षमालिङ्ग्य ।) कथमिव ।

**विदूषकः**—(कर्णे ।) एव्वमेवम् । (क)

**राजा**—(सानन्दम् ।)

भूयोऽपि तावदिदमेव निवेदय त्वं
　चन्द्रांशुभिः कवलिता इव सूक्तयस्ते ।
अन्तर्बहिश्च हृदयेन किमप्यमन्द-
　निःस्यन्दमिन्दुमणिनेव विलीयते मे ॥ ८ ॥

(इति सोत्साहम् । आकाशे ।)

भव भव शतयामा यामिनि स्वामिनि त्वं
　छुरय रजनिनाथ ज्योत्स्नया दिङ्मुखानि ।
अयि विरमय काम क्रेङ्कितं क्रूरबाण-
　व्ययपरिचयचञ्चत्कर्मणः कार्मुकस्य ॥ ९ ॥

(गगनमवलोक्य ।) सखे, समासन्नप्रायस्तत्र गमनसमयः । तथा हि ।

व्योमभ्रान्तिपरिश्रमेण तृषितैराकृष्यमाणो हयैः
　प्रस्वेदश्लथमानसारथिकरप्रभ्रष्टवल्गैरिव ।
अम्भोधेरधिकूलकच्छगहनं क्षीणच्छवि क्ष्माभृतः
　स्थित्वा मूर्धनि पश्चिमस्य विशति स्वैरं ग्रहग्रामणीः ॥ १० ॥

अपि च ।

दूरं भानुरुदञ्चितारुणचरः पाथोनिधौ पद्मिनी-
　स्पर्शासक्तरजोङ्गरागविगमत्रासादिवामज्जति ।
अन्तः कान्तिमिव प्रियस्य विरहोत्कण्ठाविनोदार्थिनी
　रोद्धुं मुद्रयति स्वपङ्कजवनीकोषं च पाथोजिनी ॥ ११ ॥

**विदूषकः**—भो पिअवअस्स, अअं अ तीए अवत्थाणिवेद्दओ विरहलेहो वाचीअदु । (ख)

---

(क) एवमेवम् ।

(ख) भोः प्रियवयस्य, अयं च तस्या अवस्थानिवेदको विरहलेखो वाच्यताम् ।

(राजा वाचयति ।)

एतां गृहाण सखि रत्नगृहप्रविष्टां
ज्योत्स्नां पिधाय सहसैव गवाक्षमार्गान् ।
नीलीरसेन सह वर्तय पट्टके च
चन्द्रः समेतु कियतापि परिक्षयेण ॥ १२ ॥

ज्योत्स्नानिर्गममार्गमुद्रणविधिं धत्तोरुकुम्भे मुहु-
स्तारा: कारयतान्यतो[1] बत मुहुः संमार्जनीनां चयैः ।
पञ्चेषोर्भजताभिचारचरुतां[2] विस्मार्यतां पञ्चमः
किं चायं पिकमण्डलस्य मयि चेत्सख्यः सुखं वाञ्छथ ॥१३॥

अपि च ।

कलयत दलबन्धं संधिषु न्यस्य सान्द्रं
ननु जतुरसपङ्कं पङ्कजेन्दीवराणाम् ।
इह विरहवतीनां जीवितं येन नायं
हरति परिमलश्रीबान्धवो गन्धवाहः ॥ १४ ॥

नयनयुगलवल्गन्नीरसंक्षाल्यमान-
स्तनमलयजलेपा सावलेपा कथासु ।
इति सुभग समग्रामेव रात्रिं विधत्ते
निरुजसुलभवस्तुप्रार्थनाभिः सखीनाम् ॥ १५ ॥

अपि च ।

धूर्तोऽयं सखि बध्यतामिति विधुं[3] रश्मिव्रजैः कर्षति
ज्योत्स्नाम्भः परतः प्रयात्विति रिपुं राहुं मुहुर्याचते ।
अप्याकाङ्क्षति सेवितुं सुवदना देवं पुरद्वेषिणं
भूयो निग्रहवाञ्छया भगवतः शृङ्गारचूडामणेः ॥ १६ ॥

**विदूषकः**—एह्णिं किं मण्णसि । (क)

---

(क) अधुना किं मन्यसे ।

---

१. 'वरमुहुः' इत्यादर्शपाठः. २. 'चतुरा' इत्यादर्शपाठः. ३. 'विधू' इत्यादर्शपाठः.

**राजा**—(लेखं[1] बहुलं प्रसार्य ।) कथमत्राप्यक्षराणि । (वाचयति ।)

पश्यागच्छ कुतूहलादपि गृहानसाकमाकर्णय
त्वं देवि च्छलिता न केनचिदिति प्रोक्तं शुकानामपि ।
सा नः कापि सखीषु नास्ति सुभग प्राप्तस्तदीयाङ्कक-
स्पर्शोष्मग्लपितो न कामपि रुजं यस्याः किणाङ्कः करः॥१७॥

कथमपि हृदि कृत्वा त्वद्वियोगातिभारं
सुभग निबिडलज्जामज्जदारम्भमास्ते ।
पिशुनयति कृशाङ्ग्याः केवलं मन्मथाग्निं
श्वसित[2]पवनधूमश्यामला चित्रशाला ॥ १८ ॥

**विदूषकः**—(पुरतोऽवलोक्य।) भो, तुह्माणं दुहुं पि तारिसो सिणेहो जारिसो इमस्स चक्कवाअजुअलस्स । (क)

**राजा**—(सस्पृहमवलोकयन्[3] ।)

रक्ताम्भोरुहचारुचञ्चुपुटकेनोद्धर्तुमिच्छन्निव
भ्रश्यत्पश्यति बिम्बमम्बरमणेश्चक्राह्वयो विह्वलः ।
साश्रुर्मुञ्चति चक्षुषी प्रतिदिशं कान्तास्य दीनानना
मा भैषीस्त्वमिति स्वकालविरहत्राणार्थिनीवानिशम् ॥ १९ ॥

**विदूषकः**—भो, निरन्तरगोधनसहस्ससमुद्धूतधूलीसमुच्छाहिदतरुणतरतिमिररिञ्छोलीलञ्छणे समए अणुसरीअदु संकेदट्ठाणम् । (ख)

**राजा**—(ऊर्ध्वमवलोक्य ।)

संधत्ते धूपधूमच्छविमबहु तमः प्राप्यते तारकाभिः
पुष्पस्रग्दामशोभा नभसि नवनिशाकामिनीतल्पकल्पे ।

---

(क) भोः, युवयोर्द्वयोरपि तादृशः स्नेहो यादृशोऽस्य चक्रवाकयुगलस्य ।

(ख) भोः, निरन्तरगोधनसहस्रसमुद्धूतधूलीसमुत्साहिततरुणतरतिमिरपङ्क्तिलाञ्छने समयेऽनुस्रियतां संकेतस्थानम् ।

---

१. 'लेखनं' इत्यादर्शपाठः. २. 'श्वसिति' इत्यादर्शपाठः. ३. 'अवलोकयति' इत्यादर्शपाठः.

मध्ये कस्तूरिकाङ्कं दधदिव हरिणं किं च संध्यानुबन्धा-
दिन्दुः सिन्दूरभिन्नस्फटिकमणिशिलाबुध्नलीलां तनोति ॥२०॥

तदादेशय तमुद्देशं यावन्नालम्बते जरठतां रजनीपरिवृढः ।

**विदूषकः**—इदो पिअवअस्सो । (क)

(इति परिक्रामतः ।)

**विदूषकः**—(अग्रतो दृष्ट्वा ।) एदं तम् । पविसदु भवम् । उपविसदु पिअवअस्सो । (ख)

(तथा कुरुतः ।)

**राजा**—अहो रम्यः समयः ।

बध्यन्ते कुसुमगृहाणि धूपधूमै-
स्तान्येव स्मरदयितानि संस्क्रियन्ते ।
धन्यानामपि च सुलोचनासमीपे
रोचन्ते सपदि मनोलसद्विलासाः ॥ २१ ॥

**विदूषकः**—भो वअस्स,

कीराणं पञ्जराणं सुरतकलरुओग्घुट्ठवादानुवाद-
त्तासेणं किज्जमाणा मणिमयवलहीवाहिराईं वडन्ति ।
सेज्जाठाणे कआणं फुरइ कलरवो केलिपारावआणं
धण्णाणं हुन्ति कीलाजलकणहरणा संपदं चन्दपाआ॥२२॥(ग)

**राजा**—(निःश्वस्य ।)

उरसि सुरतनिद्रालीनकान्ते न मग्नं
धवलगृहगवाक्षस्पन्दिभिश्चन्द्रपादैः ।

---

(क) इतः प्रियवयस्यः ।

(ख) एतत्तत् । प्रविशतु भवान् । उपविशतु प्रियवयस्यः ।

(ग) भो वयस्य,

कीराणां पञ्जराणां सुरतकलरुतोद्घुष्टवादानुवाद-
त्रासेन क्रियमाणा मणिमयवलभीब्रहिर्भागेण पतन्ति ।
शय्यास्थाने······स्फुरति कलरवः केलिपारावतानां
धन्यानां भवन्ति क्रीडाजलकणहरणाः सांप्रतं चन्द्रपादाः ॥

श्रुतमपि भुजशाखापञ्जरे चारुलीला-
मधुरमधरपीडाकूजितं नायताक्ष्याः ॥ २३ ॥

(इति सौत्सुक्यम् ।)

सान्द्रश्रीखण्डपाण्डुस्तनकलशभरात्तारहारप्रकाण्ड-
ज्योत्स्नापुञ्जाभिषेकद्विगुणपरिणमत्कौमुदीमग्नवक्त्रा ।
उत्कण्ठाकृष्यमाणा प्रगुणमनसिजादिश्यमानेन काचि-
न्मार्गेण प्राणनाथप्रणयरभसतः सान्द्रलीलां तनोति ॥ २४ ॥

यस्यै कुप्यति नूतनस्तरुणिमा लावण्यलक्ष्मीरियं
यत्रापत्रपते न संवदति या प्रेमानुबन्धस्य न ।
श्रुत्वैतां च ततां गिरं चिरमसावेतत्किमित्याकुलो
वैक्लव्यं च कुतूहलं च वदनं स्मेरं च धत्ते स्मरः ॥ २५ ॥

(ततः प्रविशति कर्णसुन्दरीवेषा देवी, बकुलावलिवेषा हारलता च ।)

**देवी**—सहि हारलदे, अह्मे किं पि सुणन्तिओ चिट्ठह्म । (क)

**राजा**—अये, कथं प्राप्तैव प्राणेश्वरी । (मुखमवलोक्य ।) अहह ।

जानामि विस्मृतिममन्यत पद्मयोनि-
र्लावण्यसारमभिलिख्य मृगाङ्कबिम्बम् ।
तेनात्र काकपदकं हरिणच्छलेन
दत्त्वा लिलेख मुखमायतलोचनं ते ॥ २६ ॥

**विदूषकः**—अहं पि दाव वण्णेमि ।

रइकलहविरोहे रोहिणीकज्जलंसु-
प्पसरपरिगदो व्व ज्झामलो लञ्छणेण ।
निजवअणसवण्णं जामिणीडिम्भमेणं
वहइ रअणिणाहो लालयन्तो व्व अङ्के ॥ २७ ॥ (ख)

---

(क) सखि हारलते, आवां किमपि शृण्वत्यौ तिष्ठावः ।

(ख) अहमपि तावद्वर्णयामि ।

रतिकलहविरोधे रोहिणीकज्जलाश्रु-
प्रसरपरिगत इव श्यामलो लाञ्छनेन ।

**देवी**—(आत्मगतम् ।) हदास, तुज्झ एसो सव्वो एव्व परिप्फन्दो । (क)

**राजा**—सखि बकुलावलि, किमियं वामता भवत्सख्याः, यदेवमालोकनेनापि न कृतार्थयति ।

**हारलता**—णेहो एत्थ अवरज्झदि, णो उण वामदा । (ख)

**राजा**—

झटिति कुवलयानि व्रीडया पीडितत्वा-
द्दधतु कृतकनिद्रां चन्द्रिकासंगमेऽपि ।
अपि तरलय लीलामज्जदुन्मज्जदन्तः-
स्फुरितकुसुमचापं चक्षुराकेकराक्षि ॥ २८ ॥

अपि च ।

सुतनु विसृज लज्जां वल्गु वल्गन्तु वाचः
कवचयतु विपञ्चीपञ्चमः श्रोत्रयुग्मम् ।
अपि कुरु परिरम्भं चारु रम्भोरु गात्रे
परिणमति कठोरः कैरवेशप्रकाशः ॥ २९ ॥

(इति समन्तादवलोक्य । आत्मगतम् ।) अहो निःसीमं रामणीयकम् ।

जयति धनुरधिज्यं भ्रूविलासः स्मरस्य
स्पृशति किमपि जैत्रं तैक्ष्ण्यमक्ष्णोः प्रचारः ।
अपि च चिबुकचुम्बी श्यामलाङ्ग्यास्तनोति
स्तनकलशनिवेशः पेशलश्रीः[1] पृथुत्वम् ॥ ३० ॥

(इत्यालिङ्गति ।)

**देवी**—(प्रकटीभूय ।) साअदं अज्जउत्तस्स । (इति क्षिपति ।) (ग)

---

निजवदनसवर्णं यामिनीडिम्भमेनं
वहति रजनिनाथो लालयन्निवाङ्के ॥

(क) हताश, तवैष सर्व एव परिस्पन्दः ।

(ख) स्नेहोऽत्रापराध्यति, न पुनर्वामता ।

(ग) स्वागतमार्यपुत्राय ।

---

१. 'पेशलश्रीपृथुत्वम्' इत्यादर्शपाठः.

**राजा**—(सवैलक्ष्यम् ।)

स्वयं कृतेऽपराधे तु ज्ञाते धीर्यस्य जायते ।
अपत्रपायां महती तद्वैलक्ष्यं वयं स्तुमः ॥ ३१ ॥

(विदूषको राज्ञः पक्षश्चाधोमुखस्तिष्ठति ।)

**राजा**—

त्वां प्रत्येव मयापि नर्म कृतमित्युक्ते कुतो मन्यसे
निर्दोषोऽहमिति ब्रवीमि सहसा दृष्टव्यलीकः कथम् ।
क्षन्तव्यं मयि सर्वमित्यपि भवेदङ्गीकृतोऽयं विधिः
किं वक्तुं मम युक्तमित्यनुगुणं देवि त्वमेवादिश ॥ ३२ ॥

(इति पादयोः पतितुमिच्छति ।)

(देवी साक्षेपं हारलतया सह निष्क्रान्ता ।)

**विदूषकः**—भो, किं अरण्णरोदणेण । देवी एव्व अणुसरीअदु । (क)

**राजा**—एवमिति ।

(इति निष्क्रान्ताः सर्वे ।)

**इति तृतीयोऽङ्कः ।**

---

चतुर्थोऽङ्कः ।

(नेपथ्ये ।)

अवन्ध्या भवतु प्रभातसंध्या देवस्य । संप्रति

रवितुरगखुराग्रक्षुण्णपूर्वाद्रिधातु-
क्षितिरज इव धत्ते धाम पौरंदरी दिक् ।
अपरजलधिवेलोद्भूतडिण्डीरपिण्ड-
भ्रमममृतमरीचिः किं च दत्ते प्रतीच्याम् ॥ १ ॥

अपि च ।

चन्द्रालोकनरागजागरणतः श्रान्तेव कृत्स्नां निशां
प्रालेयानिलसौहृदात्कुमुदिनी निद्रावृता घूर्णते ।
अप्येते विदितप्रबोधसमयाः प्रत्यूषभोगावली-
र्गायन्तीव कलस्वरा मधुलिहः पद्माकराणामितः ॥ २ ॥

---

(क) भोः, किमरण्यरोदनेन । देव्येवानुस्रियताम् ।

अपि च ।

उन्मृष्टा शयनेषु चित्रसुरतक्रीडाविधेः साक्षिणी
लाक्षारागमयी लिपिः श्रमवशाः पारावताः शेरते ।
सर्वं साधकमत्र तु प्रतिविधिं कुर्युः कुरङ्गीदृशा-
स्तादृश्यः प्रसरन्ति यद्गुरुजनस्याग्रे शुकानां गिरः ॥ ३ ॥

(ततः प्रविशति विदूषकः ।)

**विदूषकः**—(सपरितोषम् ।) साहु अमच्च, साहु । देवीए भाइणेयं कुमारं कण्णसुन्दरीए समाणवअस्सं अप्पणो सआसे से वेसधारिणं आणअन्तेण तस्स व्व णिवासे कण्णसुन्दरीं मुअन्तेण सव्वं साहिदम् । ता पिअवअस्सस्स चक्कवट्टिभावः सव्वधा अहिमुहो संवुत्तो । अवरं देवीए परिहासादो रक्खिदो अज्ज क्खु महाभावो अ । मए मन्दभाअधेआए वामत्तणेण अज्जउत्तो किलिम्मिदो त्ति कण्णसुन्दरीपदिकिदिगब्भरूअं भाइणेअं परिणाइउं पिअवअस्सो पउत्तो । संपदं देवी एव्व विलक्खा हुविस्सदि । ता दुस्सअसंगदनिवाहस्स तस्स परिवासवट्टी होमि । (इति निष्क्रान्तः ।) (क)

(ततः प्रविशति राजा विदूषकश्च ।)

**राजा**—

निद्रां लम्भयता चिरं भगवता भालस्थलीलोचन-
ज्वालापल्लवसंस्तरे पुरजिता पुष्पायुधं मन्मथम् ।

---

(क) साधु अमात्य, साधु । देव्या भागिनेयं कुमारं कर्णसुन्दर्याः समानवयस्कमात्मनः सकाशे तस्या वेषधारिणमानयता तस्यैव निवासे कर्णसुन्दरीं मुञ्चता सर्वं साधितम् । तत्प्रियवयस्यस्य चक्रवर्तिभावः सर्वथाभिमुखः संवृत्तः । अपरं देव्याः परिहासाद्रक्षितोऽद्य खलु महाभावश्च । मया मन्दभागधेयया वामत्वेनार्यपुत्रः क्लामित इति कर्णसुन्दरीप्रतिकृतिगर्भरूपं भागिनेयं परिणाययितुं प्रियवयस्यः प्रवृत्तः । सांप्रतं देव्येव विलक्षा भविष्यति । तद्दुःसहसंगतनिवासस्य(?) तस्य परिपार्श्ववर्ती भवामि ।

हा हानिर्महती कृता विरहिणां यद्वज्रसारान्स्मरः
कोऽप्यन्यः क्षिपति प्रतिक्षणमयं मर्माविधः सायकान् ॥ ४ ॥

[1]अपि च ।

न प्राप्तः प्रणयापराधसमये बाष्पाम्बुधौतोऽधर-
श्चित्रं नात्र विपर्ययेण सुतनोर्दृष्टं भ्रुवोस्ताण्डवम् ।
निद्रामुद्रितचक्षुषः श्रुतमपि क्रीडावसाने मया
न प्रत्युत्तरमुत्कटाक्षरमहो वामः प्रकामं विधिः ॥ ५ ॥

**विदूषकः**—अहो, अज्ज वि किंति उत्तम्मसि । जं मसिविलित्तं कदुअ पिसुणाणं वअणं संपण्णकप्पो जादो मणोरहो । (क)

**राजा**—

युक्त्या यद्यपि मुद्रितो विधिरयं चेतस्तथापि स्थिरा-
माशामेति कुरङ्गशावकदृशः प्राप्तौ न तस्याः क्षणम् ।
अङ्कस्थेऽपि जने मनोहृति किमप्युत्प्रेक्षते तत्क्षणा-
ज्ज्ञेयं कापि सुलोचना पुनरसावायाति दूरे दृशोः ॥ ६ ॥

(नेपथ्ये ।)

सुखाय ग्रीष्मसमयो महाराजस्य । संप्रति

सत्पानीयमिति श्रुतेः स्वभवने पूर्वं परीक्षाविधौ
त्वद्वैरिक्षितिपालपक्ष्मलदृशस्तृष्णातुराः कानने ।
बाष्पाम्भःकणचक्रवालरचनाचञ्चत्कपोलान्तरं
मुक्तादाम विलोकयन्ति गमनव्यग्राः कुचाग्रस्थितम् ॥ ७ ॥

**राजा**—(सोत्कण्ठम् ।)

सपदि दिवसमध्ये पुण्यभाजः सुजन्मा
वितरति रतिलीलोल्लासिना मानसेन ।

---

(क) अहो, अद्यापि किमित्युत्ताम्यसि । यन्मषीविलिप्तं कृत्वा पिशुनानां वदनं संपन्नकल्पो जातो मनोरथः ।

---

१. 'अपि च' इत्यादर्शे नास्ति.

वरयुवतिरमन्दं चन्दनस्यन्दसान्द्र-
प्रसृतलवणिमाम्भःपङ्किलामङ्कपालीम् ॥ ८ ॥

(सौत्सुक्यम् ।)

रम्भास्तम्भमनोभिरामसहजस्पर्शा यदूरुस्फिजः
संपन्नागुरुधूपवासविधयो यन्मज्जनार्द्राः कचाः ।
यच्चाकैतवशीतलाः कुचभुवः सा कान्तिरेणीदृशः
पुष्पेषोस्तदहो निदाघसमयम्लानस्य जीवातवे ॥ ९ ॥

अपि च ।

ताम्बूलद्रवमुद्रणेन विधुरच्छायो न बिम्बाधर-
श्चक्षुः क्षालितकज्जलं जलभरैः पुष्यत्यभिख्यां निजाम् ।
कोऽप्यन्यः कबरीभरस्य विगलद्बिन्दोरमन्दो रसः
स्नानान्ते सपदि स्मरास्त्रमनघं किं वा न वामभ्रुवाम् ॥ १० ॥

तत्किमद्यापि चिरयति देवीसमाह्वानम् ।

**विदूषकः**—भो, मा उत्तम । देवीए एसो पडिहासो त्ति महन्तो अहिणिवेसो । (क)

(प्रविश्य ।)

**चेटी**—जेदु जेदु भट्टा । एदाइं आहरणाइं देवीए पेसिदाइं विवाहजोग्गाइं परिहाइअ विवाहभूमी तुरिदं अलंकरीअदु । (इत्याभरणानि समर्पयति ।) (ख)

**राजा**—एतत्त्वं गृहाणापरम् । मां समागतं देव्यै निवेदय । (इति कण्ठादवतार्य मुक्तादाम समर्पयति ।)

(चेटी गृहीत्वा निष्क्रान्ता ।)

---

(क) भोः, मा उत्ताम्य । देव्या एष परिहास इति महानभिनिवेशः ।

(ख) जयतु जयतु भर्ता । एतान्याभरणानि देव्या प्रेषितानि विवाहयोग्यानि परिधाय विवाहभूमिस्त्वरितमलंक्रियताम् ।

**राजा**—(आत्मीयानलंकारान्विदूषकाय दत्त्वा नाट्येनात्मानमलंकरोति। निःश्वस्य।)

तद्वैवाहिकहोमधूमकलनामीलत्कपोलं मुखं
किं लज्जारसमज्जनादवनमज्जायेत दृग्गोचरम्।
यत्पारिप्लवलोचनाञ्चलमिलद्दूर्वाङ्कमङ्के रतेः
सुप्तस्यापि मनोभुवस्त्रिजगतां साम्राज्यदानक्षमम्॥ ११॥

**विदूषकः**—किं तुहं विवाहविहीए अग्गिपज्जालणेण वा करेसि। जधा तं समप्पइ देवी तथा सव्वधा गिह्णसु। (क)

(नेपथ्ये।)

गीयन्तां मङ्गलानि स्फुरतु चतुरता ताण्डवे लासिकानां
सिच्यन्तां बाह्यकक्षाः क्षितिपतिभिरपि क्षिप्यतां पुष्पवृष्टिः।
संघैः स्वःकन्यकानां परिणयविधये मण्डपोद्देशमेति
प्रेयश्चित्तानुवृत्तिव्रतनिहितमतिः सस्मिता येन देवी॥ १२॥

**विदूषकः**—भो, णीसंदेहं जाणसु वञ्चिदा देवी। ता एहि। तुरिदं गच्छह्म। इदो इदो। (ख)

(इति परिक्रामतः।)

(ततः प्रविशति देवी चेटी च, विभवतश्च परिवारः।)

**देवी**—सहि हारलदे, पज्जत्तं विप्पलम्भेण अज्जउत्तस्स। (इति पुरोऽवलोक्य।) एसो संपत्तो भट्टा समं बम्भणविडेण। (ग)

(इति सावरणं तिष्ठतः।)

**विदूषकः**—एसा देवी। उपसप्पदु भवम्। (घ)

(इति तथा कुरुतः।)

---

(क) किं त्वं विवाहविधयेऽग्निप्रज्वालनेन वा करोषि। यथा तां समर्पयाति देवी तथा सर्वथा गृहाण।

(ख) भोः, निःसंदेहं जानीहि वञ्चिता देवी। तदेहि। त्वरितं गच्छावः। इत इतः।

(ग) सखि हारलते, पर्याप्तं विप्रलम्भेनार्यपुत्रस्य। एष संप्राप्तो भर्ता समं ब्राह्मणविटेन।

(घ) एषा देवी। उपसर्पतु भवान्।

**देवी**—(उत्थाय ।) जेदु जेदु अज्जउत्तो । (क)

(सर्वे यथोचितमुपविशन्ति ।)

**देवी**—(अञ्जलिं बद्ध्वा ।) जं मए किं पि विरुद्धं आअरिदं तस्स दण्डं कण्णसुन्दरीं समप्पेमि । (ख)

**राजा**—महानुभावप्रकृतिरसि । यदभिरुचितं तदाचर ।

(प्रविश्य ।)

**प्रतीहारी**—अमच्चो दुआरे चिट्ठदि । (ग)

**राजा**—तूर्णं प्रवेशय ।

(इति प्रतीहारी निष्क्रान्ता ।)

(ततः प्रविशत्यमात्यः प्रतीहारी च ।)

**प्रतीहारी**—इदो इदो अमच्चो । (घ)

(इति परिक्रामतः ।)

**प्रतीहारी**—एसो भट्टा । उपसप्पदु अमच्चो । (ङ)

(अमात्यो यथोचितमुपसर्पति ।)

**राजा**—आसनमासनम् ।

(प्रतीहारी आसनं दत्त्वा निष्क्रान्ता ।)

**देवी**—सहि, आणेसु कण्णसुन्दरिं जेण अमच्चस्स पुरदो समप्पिअ निरवराहा होमि । (च)

**चेटी**—णववहुत्ति जेव्व जवणिअन्तरे धरिदा सा । (इति निष्क्रम्य तां गृहीत्वा प्रविश्य च ।) देवि, पडिच्छसु एणम् । (छ)

---

(क) जयतु जयत्वार्यपुत्रः ।

(ख) यन्मया किमपि विरुद्धमाचरितं तस्य दण्डं कर्णसुन्दरीं समर्पयामि ।

(ग) अमात्यो द्वारे तिष्ठति ।

(घ) इत इतोऽमात्यः ।

(ङ) एष भर्ता । उपसर्पत्वमात्यः ।

(च) सखि, आनय कर्णसुन्दरीं येनामात्यस्य पुरतः समर्प्य निरपराधा भवामि ।

(छ) नववधूरित्येव जवनिकान्तरे धृता सा । देवि, प्रतीच्छैनाम् ।

**देवी**—(सलज्जां नायिकामन्तिके निवेश्य स्वगतम् ।) अच्चरिअम् । पच्चक्खं सेव्व एसा । अहो माहप्पं कवडनाडअस्स । (क)

**राजा**—

माञ्जिष्ठी लिपिरोष्ठयोः क्वचितं चन्द्रस्य कान्त्या मुखं
भ्रूयुग्मं मकरध्वजस्य धनुषा सर्वाङ्गमालिङ्गितम् ।
लावण्यं कुचयोः सुवर्णकलशीमानेन नूनं कृतं
नो जाने कियतीं पपौ कुवलयच्छायां कटाक्षच्छविः ॥ १३ ॥

(विहस्य ।)

देवी निसर्गतरला तरलायताक्षी
संवादमिच्छति मदीक्षणवञ्चनाय ।
प्रत्यन्तरेक्षणमपि क्षणमेतदीय-
सादृश्यनिर्मितिविधौ विधिरप्यशक्तः ॥ १४ ॥

**देवी**—एसा मए तुज्झ समप्पिदा । भजसु णं चउसमुद्दपुहवीए रत्तम् । (इति हस्ते नायिकां समर्पयति ।) (ख)

**राजा**—(गृहीत्वा ।) प्रसन्नं देव्या ।

**देवी**—अमच्च, जुत्तं कदम् । (ग)

**अमात्यः**—किमुच्यते ।

वंशे तस्मिन्नजनि भवती मौक्तिकोत्सिक्तकान्तिः
कीर्तिर्यस्य च्छुरयति सुरक्ष्माधरेन्द्रस्य वक्षः ।
चालुक्यानां वसुमति गृहे किं च तेषां वधूस्त्वं
यैर्निश्चिन्तः कलयति हरिः सागरे नाम शय्याम् ॥ १५ ॥

(क) आश्चर्यम् । प्रत्यक्षं सैवैषा । अहो माहात्म्यं कपटनाटकस्य ।
(ख) एषा मया तुभ्यं समर्पिता । भजैतच्चतुःसमुद्रपृथिव्या रत्नम् ।
(ग) अमात्य, युक्तं कृतम् ।

१. 'नायिकां सलज्जामन्तिके निवेशयति । स्वगतम्' इत्यादर्शपाठः.

**विदूषकः**—संवुत्तो विवाहो। ता सोत्थिवाअणस्स अवसरो। (क)

**देवी**—(स्वगतम्।) हदास, पिक्खिस्ससि विआहम्। (ख)

**राजा**—(स्वगतम्।)

मदन कनकपुङ्खाः सन्त्वसंख्याः पृषत्काः
स्फुरतु विजयलक्ष्मीकर्मठं कार्मुकं ते।
अपि च सहचराणां कापि संपच्चकास्तु
प्रियजनविरहाधैरेष जातो यदन्तः॥ १६॥

**अमात्यः**—(आत्मगतम्।) अवसरः प्रकाशनस्य। (प्रकाशम्।) कः कोऽत्र।

(प्रविश्य।)

**प्रतीहारी**—आणवेदु अमच्चो। (ग)

**अमात्यः**—देवीभागिनेयः कुमारः कौतुकेनानीत आसीन्मया स्वमन्दिरे। बन्धुसंगतो न वेति जानीहि।

**प्रतीहारी**—संपदं जेव्व मए हिण्डन्तो दिट्ठो। (इति निष्क्रान्ता।) (घ)

**देवी**—(आत्मगतम्।) हा, हदम्हि मन्दभाइणी। मए कधिदं जेव्व कैदवं त्ति पच्चक्खं सेव्व एसा त्ति। ता वञ्चिदम्हि। किं कीरदि। (इति धैर्यमवलम्बते।) (ङ)

(प्रविश्य।)

**प्रतीहारी**—गज्जणणअरं जेदुं गअस्स रुच्चिकस्स सआसादो पहाणो वीरसिङ्घो आअच्छदि। (च)

---

(क) संवृत्तो विवाहः। तत्स्वस्तिवायनस्यावसरः।

(ख) हताश, प्रेक्षिष्यसे विवाहम्।

(ग) आज्ञापयत्वमात्यः।

(घ) सांप्रतमेव मया हिण्डन्दृष्टः।

(ङ) हा, हतास्मि मन्दभागिनी। मया कथितमेव कैतवमिति प्रत्यक्षं सैव एषेति। तद्वञ्चितास्मि। किं क्रियते।

(च) गर्जननगरं जेतुं गतस्य रुच्चिकस्य सकाशात्प्रधानो वीरसिंह आगच्छति।

**अमात्यः**—अविलम्बितं प्रवेशय ।

(प्रतीहारी निष्क्रम्य वीरसिंहेन सह प्रविशति ।)

**वीरसिंहः**—जयति देवः साम्राज्येन ।

**अमात्यः**—आसनम् ।

(प्रतीहारी आसनं दत्त्वा निष्क्रान्ता ।)

**राजा**—वीरसिंह, निवेदय वृत्तान्तम् ।

**वीरसिंहः**—यथा तावदितो निर्गत्य गर्जनाधिपतिबलस्यासद्धलं सिन्धो रोधसि मिलितम्, तथा देवाय निवेदितमेव । अनन्तरं महति समरसंमर्दे

पांसूनां सूचिभेद्यः सकलमपि कुलक्ष्माभृतां छादनेच्छा-
बद्धोत्साहैः प्रवाहैरसुषिरमभवद्व्योमसीमान्तरालम् ।
द्वारश्रेणीनिवेशश्रियमथ धरणीमण्डलं वीर्ययाता
जातोर्वी तेऽनुवीर(?) विरचितविवरास्तत्र चाहो मुहूर्तम् ॥ १७ ॥

ततश्च ।

किं दोर्वीर्येण मौर्वी विरचय धनुषि त्वामहं न प्रहर्ता
निःशङ्कस्त्वं रथस्थः प्रहर ननु यतः प्राक्प्रहारप्रियोऽहम् ।
वीराणामित्युदाराः सुचिरमुदचरन्नाककान्तानिकायैः
स्निह्यत्कर्णा विमानप्रणिहितवदनैर्भाविताास्तत्र वाचः ॥ १८ ॥

**राजा**—ततः ।

**वीरसेनः**—क्रमेण

नीरन्ध्रं रुन्धते स्म त्रुटितमिव तडिज्ज्योतिषा व्योमरन्ध्रं
शस्त्राणि त्रासताम्यद्दिनकरतुरगश्रेणिदूरेक्षितानि ।
तीक्ष्णासिच्छिन्नमुह्यद्भटवरवरणारम्भसंभारभाजां
येन स्वःस्वैरिणीनामवतरणविधावप्यभून्नावकाशः ॥ १९ ॥

(देवी स्मयते ।)

**विदूषकः**—उक्कम्पिदोम्हि । (क)

---

(क) उत्कम्पितोऽस्मि ।

**राजा**—ततः ।

**वीरसेनः**—

कबन्धस्कन्धेषु स्रवदतिघनस्त्यानरुधिर-
स्थिरारम्भं गुह्यावनिधरशिरः श्रेणिमभितः ।
पुरो दृष्ट्वा दृष्ट्वा सुरयुवतयः किंनरकुल-
क्षयाशङ्कातङ्कात्क्षभितमनसः क्षिप्रमभवन् ॥ २० ॥

अपि च ।

गायन्तीषु सुराङ्गनासु मधुरं सौगन्ध्यवत्तन्मुख-
श्वासोल्लासिनि षट्पदावलिरवे वेणुध्वनिस्पर्धिनि ।
धीरं वैरिकबन्धताण्डवविधौ सङ्ग्रामरङ्गे लस-
त्सेनानां गजगर्जितेन मुरजध्वानानुकारो धृतः ॥ २१ ॥

**राजा**—ततश्च ।

**वीरसेनः**—तत्कृतं कर्म रुचिकेन येन विस्मिताः सुराः ।

**राजा**—ततश्च ।

**वीरसेनः**—

त्रातारं जगतां विलोलवलयश्रेणीकृतैकारवं
सोन्मादामरसुन्दरीभुजलतासंसक्तकण्ठग्रहम् ।
कृत्वा गर्जनकाधिराजमधुना त्वं भूरिरत्नाङ्कुर-
च्छायाविच्छुरिताम्बुराशिरशनादाम्नः पृथिव्याः पतिः ॥ २२ ॥

(सर्वे मोदन्ते । विदूषको नृत्यति ।)

**अमात्यः**—किं ते भूयः प्रियमुपकरोमि ।

**राजा**—

दृष्टं देव्या किमपि भुवनाश्चर्यतत्त्वं महत्त्वं
लब्धा लक्ष्मीरिव मनसिजक्ष्माभुवः पक्ष्मलाक्षी ।
एकच्छत्रं समजनि महीमण्डलं तत्प्रियं मे
किं स्यादस्मात्परमपि वरं यत्तु याचे भवत्तः ॥ २३ ॥

---

१. 'वरश्रेणि' इत्यादर्शपाठः.

तथापीदमस्तु—

हेलाभ्यस्तसमस्तशास्त्रगहनः साहित्यपाथोनिधि-
क्रीडालोडनपण्डितः प्रियतमः शृङ्गारिणीनां गिराम्।
एकैकेन दिनेन निर्मितमहाकाव्यादिरव्याहत-
प्रागल्भ्यस्थितिविश्रुतः स्थिरमतिः पार्श्वे विदग्धः कविः ॥ २४ ॥

(इति निष्क्रान्ताः सर्वे।)

**इति चतुर्थोऽङ्कः।**

---

ग्रन्थकर्तुः प्रशस्तिः।

भट्टश्रीविह्लणोऽस्याः कविरकलुषधीः सिद्धयः साहसानां
स्रष्टुः शिष्टोपकारव्रतपरमगुरोः संमुखा यस्य तास्ताः।
अर्धे चन्द्रार्धमौलेर्विरचितवसतिर्देवता सापि यस्मै
शब्दब्रह्माभ्यनुज्ञां सममुपनिषदा बाल्य[1] एवादिदेश ॥ १ ॥

यन्मूलं करुणानिधिः स भगवान्वल्मीकजन्मा मुनि-
र्यस्यैके कवयः पराशरसुतप्रायाः प्रतिष्ठां दधुः।
सद्यो यः पथि कालिदासवचसां श्रीविह्लणः सोऽधुना
निर्व्याजं फलितः सहैव कुसुमोत्तंसेन कल्पद्रुमः ॥ २ ॥

विन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेति क्रमशिक्षितान्वयकथा ये केऽपि तेभ्यो नमः।
ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरा-
मुल्लेखैः कवयन्ति विह्लणकविस्तेष्वेव संनह्यति ॥ ३ ॥

[2]सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥ ४ ॥

**[3]समाप्तेयं कर्णसुन्दरी नाम नाटिका।**

---

१. 'सान्द्रैर्वेदध्वनिभिरनभिव्यक्तमञ्जीरनादा मौञ्जीबन्धात्प्रभृति वदने यस्य वाग्देवतासीत्' इति विक्रमाङ्कदेवचरितेऽपि (१८।८१) विह्लणकविरात्मानं वर्णयति स्म. २. विक्रमाङ्कदेवचरितस्य प्रथमसर्गेऽप्ययं श्लोकः समुपलभ्यते. ३. आदर्शपुस्तके 'समाप्ता चेयं कर्णसुंद' इत्येतावदेवास्ति.

# कर्णसुन्दरीगतश्लोकानां सूची ।

